अन्वयः— मसृणस्तिमिता स्मितरोचिषा तिलतण्डुलिता हृदयङ्गमभाव-विकाशिका हरिणीदृशः मधुरादृशः जगत् मदयन्ति।

बालसुबोधिनी— सयुगादिति। यदि प्रतिपादं सयुगात्परा सलगाः स्युः सा ललितव्रता वेदितव्या।

मसृणेत्यादि। हरिणीदृशः चपलनेत्रायाः स्त्रियाः इति विशेषणद्वारा विशेष्यप्रतिपत्तिः। क्वचित् विशेषणमपि विशेष्यप्रतिपत्तिकरमिति वामनदर्शनात्। दृशः कटाक्षाः जगत् भुवनमपि मदयन्ति हर्षयन्ति। ताः कीदृश्यः मसृणाः स्निग्धाः स्तिमिताः सरलाः। मसृणः सरले स्निग्धे कृपायां मसृणा भवेदिति विश्वः। तथा स्मितस्य मन्दहासस्य रोचिषा कान्त्या तिलतण्डुलिताः तिलतण्डुलवदाचरिताः, हासकटाक्षयोः शुक्लकृष्णत्वात् तिलतण्डुलसाम्यम्। तथा च— अथ श्वेता-नित्यनुवृत्तौ कविकल्पलता— कैलाशकाशकार्पाश हासवासवकुञ्जरा इति। अथ कृष्णानित्यनुवृत्तौ तत्रैव— रसावद्भुतशृङ्गारौ कटाक्षोऽपि कनिनिकेति। तथा हृदयङ्गमं स्वमनसि स्थितं भावं शृङ्गाराभिप्रायं विकाशयन्तीति तथा, अतो मधुरा मनोनयनप्रियाः। स्वादुप्रियौ तु मधुरावित्यमरः।।

**Eng. Trans.**—If the *gaṇa*s in each quarter of a stanza be *sa, sa, sa, la,* and *ga,* then the metre is called *Lalitavratā*. (23)

**विज्ञेयोत्कलिका मसौ जगौ गः।। 24।।**

**व्यावृत्तस्फुरिताधरा चलाक्षी**
**भ्रूवल्लीसमकम्पिनी तर्जनिका।**
**निश्चासोद्गमितस्तनी यदूचे**
**हृत्पटे मम तन्निखातमस्ति।।**

अन्वयः— व्यावृत्तस्फुरिताधरा चलाक्षी भ्रूवल्लीसमकम्पिनी तर्जनिका निश्चासोद्गमितस्तनी (नायिका) यत् ऊचे मम हृत्पटे तत् निखातम् अस्ति।

बालसुबोधिनी— यदि प्रतिपादं मसौ मगणसगणौ ततो जगणगसंज्ञकौ ततो गः गुरुवर्णः सा उत्कलिका विज्ञेया।

व्यावृत्तेति। यत्र कश्चिन्नायको दूतीपुरतो दुःखं निवेदयति। एवम्भूता नायिका यत् वचनमूचे उक्तवती तन्मम हृत्पटे मानसपट्टे निखातमस्ति क्षतमिव तिष्ठति।

सा कीदृशी। व्यावृत्तेन विपरीतप्रवृत्या स्फुरितौ विकशितौ अधरौष्ठौ यस्याः सा। तथा चले चञ्चले अक्षिणी यस्याः सा, तथा वक्रत्वात् सौकुमार्याच्च भ्रूवावेव वल्ली लता तस्याः समा सदृशी कम्पिनी कम्पयुक्ता तर्ज्जन्यङ्गुली यस्याः। तथा निश्वासेन रोषश्वासेन उद्गमितौ उच्चैः स्तनौ यस्याः। एतेन क्रोधातिशयः उक्तः। ''ऊचे'' इति ब्रूञो वचादेशे लिटि (परोक्षायाम्) आत्मनेपदे प्रथमैकवचने रूपमुभयपदित्वात्। ''येनैवलब्धसम्बन्धे'' इति युक्ते मामिति विभक्तिपरिणामेन योज्यमिति।।

**Eng. Trans.**—When the *gaṇa*s in a quarter are *ma, sa, ja, ga* and *ga,* the metre is styled *Utkalikā*.(24)

**नररलाश्च गः कामचारिणी*।। 25।।**

**जयति तेऽधिकं जन्मना व्रजः**
**श्रयत इन्दिरा शश्वदत्र हि।**
**दयित दृश्यतां दिक्षु तावका-**
**स्त्वयि धृतासवस्त्वां विचिन्वते।। (भागवत-10/31/1)**

अन्वयः— हे दयित! ते जन्मना व्रजः अधिकं जयति, अतः हि अत्र इन्दिरा शश्वत् श्रयते; दृश्यतां त्वयि धृतासवः तावकाः दिक्षु त्वां विचिन्वते।

बालसुबोधिनी— नररला इति। यदि प्रतिपादं नगणरद्वयलघुवर्णास्ततो गुरुवर्णः सा कामचारिणी वेदितव्या।

जयतीति। श्रीकृष्णविरहाकुलगोपीवाक्यं— हे दयित! व्रजवल्लभ! ते तव जन्मना व्रजः गोष्ठम् अधिकं यथा भवति तथा जयति सर्वोत्कर्षेण वर्त्तते। व्रजो गोष्ठाध्ववृन्देष्विति मेदिनी। अपि च इन्दिरा लक्ष्मीः गोधनादिसम्पत्तिः अत्र व्रजे शश्वत् सर्वदा श्रयते निश्चला सती तिष्ठति। लक्ष्मीसम्पदोरेकत्वं कविकल्प-लतायाम्। तथा च— कमलासम्पदोः कृष्णहरितो नागसर्पयोः पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु चन्द्रेशशैलयोः कामध्वजे मकरमत्स्ययोः। दानवासुर-दैत्यानामैक्यमेवाभिसम्मतमिति। अतः दृश्यताम् आलोक्यताम्। तावकाः त्वदीयप्रियरमण्य दिक्षु पूर्वादिदिग्भागेषु सर्वदिग्भ्यः लोचनानि पातयित्वेत्यर्थः, त्वां विचिन्वते निरीक्षन्ते। कीदृश्यः त्वयि विषये धृता असवः प्राणाः याभिस्ताः। एतेन तव दर्शनं विना प्राणाः स्वयमेव नश्येयुरिति भावः।।

* इन्दिरेति छन्दोमञ्जर्य्याम्।

**Eng. Trans.**—If the *gaṇas* in a quarter be *na, ra, ra, la,* and *ga,* then the metre is called *Kāmacāriṇī*.(25)

मो वा रौ वा शालिनी वेदलोकैः।। 26।।

कृत्वा पुंवत्पातमुच्चैः भृगुभ्यः
मूर्ध्नि ग्राव्नां जर्जरा निर्झरौधाः।
कुर्वन्ति द्यामुत्पतन्तः स्मरार्त्त-
स्वर्लोकस्त्रीगात्रनिर्वाणमत्र।। (माघ - 4/23)

अन्वयः— अत्र निर्झरौधाः उच्चैः भृगुभ्यः ग्राव्नां मूर्ध्नि पुंवत्पातं कृत्वा जर्जराः (सन्तः) द्याम् उत्पतन्तः स्मरार्त्तस्वर्लोकस्त्री गात्रनिर्वाणं कुर्वन्ति।

बालसुबोधिनी— मोवेति। प्रथमं मगणवसंज्ञकौ ततः रौ रद्वयं वश्च यदि प्रतिपादं भवन्ति सा शालिनी वेदितव्या। वेदलोकैरिति वेदाश्चत्वारः लोकाः सप्त तैर्यतिरित्यर्थः। तथा च छन्दोविचित्याम्— एकं रूपं द्वौ यामौ त्रयोऽग्नयः चत्वारो वेदा अब्धयश्च। पञ्चशरेन्द्रियविषयाः षड्तुरसाः सप्तलोकाश्च मुनयः। अष्टौ वसु मदनागगिरयश्च। नवरन्ध्रग्रहाः दशदिशः एकादश रुद्राः द्वादशार्का-श्चतुर्दश मनव इति।

कृत्वेति। अत्र रैवतके गिरौ निर्झरौधाः वारिप्रवाहसमूहाः स्मरेण कामेन गात्राणां निर्वाणं सुखं कुर्वन्तीत्यन्वयः। स्वर्लोको देवलोकः स्यादवरोहं फलोदयः। मन्दरः सौरिभः शत्रुभवनं खं दिवं नभः इति त्रिकाण्डशेषः। निर्वाणमस्तगमने निवृत्तौ गजमन्दन इति विश्वः। वारिप्रवाहे निर्झरो झर इत्यमरः। किं कुर्वन्तः— उच्चैः भृगुभ्यो वृहच्छिला प्रदेशेभ्यो ग्राव्नां अधोवर्तमानशिलानां मूर्ध्नि उपरि पुंवत् पुरुषा इव पातं कृत्वा पतित्वा जर्जराः शीकरतां गताः द्यां गगणमुत्पतन्तोऽतिशयेन गच्छन्तः। प्रपातस्त्वतटः भृगुरित्यमरः। पाषाणप्रस्तरग्रावो पलाश्मानः शिला दृषदिति च। झर्झरस्तु विशीर्णे स्यात् झर्झरो वासवध्वज इति धरणिः। द्यौः स्वर्गसुरवर्त्मणोरिति च। यथा केचित् पुरुषा भृगुपातं कृत्वा विशीर्णावयवा देवरूपेण दिवमारूढाः कामार्तस्वर्गस्त्रीगात्रसुरवं कुर्वते तथात्रापि निझरौघाः वृहच्छिलाप्रदेशेभ्योऽधो-वर्तमानानां शिलानां मूर्ध्निपातं कृत्वा विशीर्णा गगणमुत्पतन्तः कामार्त्तदेवस्त्री-गात्रसुखं कुर्वन्तीति समुदायार्थः।।



**Eng. Trans.**—*Śālinī* is a metre wherein the *gaṇas* in each

quarter are *ma, va, ra, ra* and *va*. Further, the *yati* exists at the fourth and seventh letter.(26)

दोधकमिच्छति भत्रितयाद् गौ।। 27।।
या न ययौ प्रियमन्यवधूभ्यः
सारतरागमना यतमानम्।
तेन सहेह बिभर्त्ति रहः स्त्री
सा रतरागमनायतमानम्।। (माघ-4/45)

अन्वयः— इह अन्यवधूभ्यः सारतरागमना या स्त्री यतमानं प्रियं न ययौ, सा रहः तेन सह अनायतमानं रतरागं बिभर्त्ति।

बालसुबोधिनी— दोधकमिति। यदि प्रतिपादं भत्रितयात् परौ गौ गुरुवर्णौ भवतः तदा दोधकवृत्तमिति।

या नेति। इह रैवतके सा कापि देवस्त्री तेन प्रियेण सह रहो विजने रतरागं सुरतानुरागं बिभर्त्ति धत्ते। अस्त्रीत्रपुणि रागस्तु मात्सर्ये लोहितादिषु। क्लेशादावनुरागे च गान्धारादौ नृपेऽपि चेति मेदिनी। सा का इत्याह। या स्त्री यतमानं यत्नं कुर्वन्तं अन्यनाथमिति यावत्। प्रियं पतिं न ययौ न गता। नञभावे निषेधे च स्वरूपात्मव्यवक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोरिति विश्वः। यत्नकरणे हेतुमाह— अन्यवधूभ्यः अपरस्त्रीभ्यः सारतरमुत्कृष्टतरमागमनं यस्याः सा तादृशी सर्वोत्तमेत्यर्थः। रतरागं कीदृशं अनायतः अधर्म अल्पीभूत इति यावत्। मानश्चित्तसमुन्नतिर्यस्मात् तादृशं अनायतमानं यथा स्यात्तथा; रतरागं बिभर्त्तीति क्रियाविशेषणम्वा। यद्वा अन्यवधूभ्य इति ल्यव्लोपे पञ्चमी। या स्त्री अन्यवधूमपेक्ष्य यतमानं प्रियं न ययौ तेन प्रियेण सह इह गिरौ आरतरं शीघ्रतरं आगमनं यस्याः तादृशी सती रहः सुरतं बिभर्त्ति। सारो वेगे च रोगे चेति धरणिः। कीदृशी सा अरतरागमना अविद्यमानो रतरागो यस्य तच्च मनश्चेति तेन सह वर्त्तत इति सा तथा सुरतविरक्तचित्तेत्यर्थः। आयतमानं आसमन्तात् उपरतमानं यथा स्यात्तथा क्रियाविशेषणम्। यमुपरमे इत्यस्य क्तप्रत्यये रूपं रहोविशेषणम्वा।।

**Eng. Trans.**—When three *bhas* are followed by two *gas* in a quarter of a stanza , the metre is called *Dodhaka*.(27)

स्वागता रनभगद्वययुक्ता।। 28।।

प्राप्य नाभिह्रदमज्जनमित्यादि—

बालसुबोधिनी— स्वागतेति। यदि प्रतिपादं रश्च नश्च भश्च गद्वयञ्च तैर्युक्ता सा स्वागता वेदितव्या।

उदाहरणं प्राप्य नाभिह्रदेति। अस्य व्याख्या पूर्वमुक्ता।।

**Eng. Trans.**—When there exist the *gaṇa*s namely *ra, na, bha* and two *gas*, in a quarter, the metre is denominated as *Svāgatā*.(28)

रादथो नरलगा रथोद्धता।। 29।।

क्षालयामि तव पादपङ्कजे
नाथ दारुदृशदोस्तु का भिदा।
मानुषीकरणरेणुरस्ति ते
पादयोरिति कथा प्रथियसी।। (उद्भटसागर)

अन्वयः— हे नाथ! तव पादपङ्कजे क्षालयामि, दारुदृशदोः तु का भिदा? ते पादयोः मानुषीकरणरेणुः अस्ति, इति कथा प्रथियसी।

बालसुबोधिनी— रादिति। अथो इति वृत्तान्तरारम्भे यदि प्रतिपादं रात् रगणात् परा नरलगाः नगणरगणलघुगुरुवर्णाः स्युः सा रथोद्धता ज्ञेया।

उदाहरणं क्षालयामीति। श्रीरामं प्रति गुहवाक्यं– हे नाथ! तव पादपङ्कजे क्षालयामि चरणयोर्धूलिमपनयामि। ननु किमर्थं पादप्रक्षालणमिति चेत्तत्राह– अमानुषा मानुषा क्रियन्त इति च्विः, मानुषी नरत्वं तद्रेणुश्च ते तव चरणयोरास्त। गौतमशापेन शिलाखण्डभूतायाः अहल्यायास्तव पादरेणुस्पर्शमात्रेणैव मानुषत्व-सम्भवात्। न केवलं मय्येव विदितैषा कथा, किन्तु सर्वत्रापीत्याह– इति एतादृशी कथा सर्वत्र प्रथियसी प्रख्याता। ननु मम पादरेणोः शिलाया मानुषीकरणत्वं प्रसिद्धं तव किमिति चेत्तत्राह– दारुदृशदोस्तु का भिदा कः पुनर्भेदः, उभयोरपि जडत्वसाम्यात् न कोऽपि भेद इत्यर्थः। अतस्तव पादरेणोः स्पर्शमात्रेण नौकाया अपि तत्सम्भवात्, पादप्रक्षालणेनैव तमपास्य त्वां नदीमुत्तरयामीत्यर्थः।।

**Eng. Trans.**—When the *gaṇas* in a quarter are *ra, na, ra, la,* and *ga,* the metre is termed *Rathoddhatā.*(29)

एतयोरपि च शङ्करभावा—
च्छ्रव्यवृत्तमुपजातिरुच्यते।
पिङ्गलादिभिरनुक्तमपीदं
दृश्यते क्वचन तेन लिख्यते।। 30।।

अन्वयः— एतयोरपि.........क्वन दृश्यते तेन लिक्ष्यते।

आलि वालिशतया वकुलोऽयं
वाटिकानिकट एव रोपितः।
न श्रुतं न च कृतं वचनं मे
तस्य सम्प्रति फलं विजृम्भते।।

अन्वयः— हे आलि! वालिशतया अयं वकुलः वाटिकानिकटे एव रोपितः; मे वचनं न श्रुतं न च कृतं सम्प्रति तस्य फलं विजृम्भते।

बालसुबोधिनी— एतयोरपीति। एतयोः स्वागतारथोद्धतयोरपि शङ्करभावात् मिलिततया श्रव्यवृत्तम् उपजातिरिति चोच्यते। इदं वृत्तं पिङ्गलादिभिरनुक्तमपि यतः क्वचन कुत्रचित् काव्यादिशास्त्रे दृश्यते तेन हेतुना मया लिख्यते।

उदाहरणमालीति। काञ्चिद्विरहिणीं प्रति कस्याश्चित् सख्या वाक्यमिदम्— हे आलि! हे सखि! भवत्या वालिशतया अज्ञतया अयं वकुलः वाटिकानिकटे गृहसमीपे एव रोपितः। ''आलिर्विशदाशये स्त्रीषु स्त्रियां वयस्यायां सेतौ पंक्तौ प्रकीर्त्तिते''ति मेदिनी। शिशावज्ञे च वालिश इत्यमरः। अज्ञतामेवाह— मे मम वचनं वाक्यं न श्रुतं नावधारितं न कृतं नानुसेवितम्, अतः सम्प्रति वर्षाकाले तस्य मद्वचनश्रवणाकरणस्य फलं फलत्वेनोपपन्ना कर्मशक्तिः विजृम्भते आविर्भवति। तत्रायमाशयः— विदूरभर्तृकायाः पुष्पदर्शनमयोग्यमिति। बहुशो मया बाधितापि वकुलो वाटिकायां रोपित एव सम्प्रति तस्य कामाग्निसन्दीपन-पुष्पसन्दर्भदर्शनेन मरणमेव तव फलिष्यतीति भावः। अत्रादितृतीयपादौ स्वागताया अन्यौ रथोद्धतायाः।।

**Eng. Trans.**—A metre, formed out of the combination

of quarters in these two metres, i.e. *Svāgatā* and *Rathoddhatā*, is also called *Upajāti*. Though it is not elaborated by Piṅgala and others, yet in some treatises, it comes to be discussed, and hence it is put into record herein also.(30)

मो वा स्त्रौ वा यदि वातोर्मिमाला।। 31।।

दोरान्दोलैः जलदालिः परास्ता
पादाघातात् पृथिवी कम्पमाप।
नृत्याटोपे प्रतिसन्ध्यं तवायं
शम्भो क्रीड़ाप्रलयं याति लोकः।।

अन्वयः— (हे) शम्भो! दोः आन्दोलैः जलदालिः परास्ताः पादाघातात् पृथिवी कम्पम् आप, (अतः) प्रतिसन्ध्यं तव नृत्याटोपे अयं लोकः क्रीड़ाप्रलयं याति।

बालसुबोधिनी— मोवेति। प्रथमं मगणवसंज्ञकौ ततः सगणरगणौ पुनरपि वसंज्ञकः यदि प्रतिपादमेते स्युः, सा वातोर्मिमाला वेदितव्या।

उदाहरणं दोरान्दोलैरिति। कश्चित् शिवं स्तौति—हे शम्भो! महादेव! प्रतिसन्ध्यं प्रतिप्रलयसन्ध्यायां तव नृत्याटोपे नृत्यातिशये सति अयं लोकः त्रिभुवनं क्रीडाप्रलयं क्रीडया प्रलयं नाशं याति प्राप्नोति। "लोकस्तु भुवने जने" इत्यमरः। इयमिति पाठे तवेयं क्रीडा, लोकस्तु प्रलयं यातीत्यन्वयः। तमेव दर्शयति— दोरान्दालैः भुजचालनादिभिः जलदालिः सम्वर्त्तादिमेघसमूहाः परास्ताः दूरं निक्षिप्यन्त इत्यर्थः। तथा पादाघातात् पादप्रक्षेपात् पृथिवी कम्पम् आप प्राप्नोति च। परास्तेति अन्येभ्योऽपि चेति वार्त्तमानिकक्तप्रत्ययः। आपेति चित्तविक्षिप्तावेति वर्तमानायां लिट् (परोक्षा), स्तुतौ प्रेम्ना चित्तविक्षेपसम्भवात्।।

**Eng. Trans.**—If the *gaṇas* in each quarter be *ma, va, sa, ra* and *va,* then the metre is called *Vātormimālā*.(31)

वदन्ति वंशस्थमिदं जतौ जरौ।। 32।।

प्रियेण संग्रथ्य विपक्षसन्निधा—
वुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तूनि।। (किरात – 8/37)

अन्वयः— प्रियेण विपक्षसन्निधौ संग्रथ्य पीवरस्तने वक्ष्यसि उपाहितां जलाविलां स्रजं काचित् (स्त्री) न विजहौ; हि प्रेम्णि गुणाः वसन्ति वस्तूनि न (वसन्ति)।

बालसुबोधिनी— यदि प्रतिपादं जतौ जगणतगणौ ततः जरौ जगणरगणौ स्तः इदं वंशस्थं नाम वृत्तं वदन्ति।

उदाहरणं प्रियेणेति। काचित् स्त्री जलाविलां जलैर्म्लानां स्रजं मालां न विजहौ न तत्याज। हेतुमाह— प्रियेण स्वामिना संग्रथ्य सम्यग् ग्रथित्वा विपक्षसन्निधौ सपत्नीसमीपे वक्षसि उपाहितां समर्पिताम्। वक्षसि कीदृशे पीवरस्तने पीवरौ अपरिणतस्थूलौ स्तनौ यत्र तस्मिन्। स्थूलपीवरमित्यमरः। अर्थान्तरन्यासमाह, हि यतः गुणाः प्रेम्णि वसन्ति, वस्तूनि न। अतः प्रियेण प्रेम्ना समर्पितत्वात् सौन्दर्यादिगुणाभावेऽपि स्रजं न विजहाति।।

**Eng. Trans.**—If the *gaṇa*s in each quarter of a stanza are *ja, ta, ja* and *ra,* the metre is then called *Vaṁśastha*.(32)

**चतुर्य्यैः समेतं भुजङ्गप्रयातम्।। 33।।**

**न भूतो न भावी न वा वर्त्तमानः**
**क्षितौ डिण्डिमानां कवीनां समानः।**
**यदेषां मुखे भारती सन्नटन्ती**
**सुधाधोरणीमाधुरीमादधाति।।**

**अन्वयः— क्षितौ डिण्डिमानां कवीनां समानः न भूतः न भावी न वा वर्त्तमानः (स्यात्), यत् एषां मुखे भारती सन्नटन्ती (सती) सुधाधोरणीमाधुरीम् आदधाति।**

**बालसुबोधिनी— चतुर्य्यैरिति। यदि प्रतिपादं चतुर्य्यैः चतुर्भिः यकारैः समेतं युक्तं तत् भुजङ्गप्रयातं नाम वृतं वेदितव्यम्।**

**उदाहरणं न भूत इति। डिण्डिमानां कवीनां समानः सदृशः क्षितौ पृथिव्यां न भूतः नासीत् न च भावी न भविष्यति न वा वर्त्तमानः सम्प्रति वर्त्तते। हेतुमाह— यत् यस्मात् एषां डिण्डिमानां मुखे वदने भारती सरस्वती नटन्ती नृत्यन्ती सती सुधायाः पीयूषस्य धोरणी धारा तस्या माधुरीं माधुर्य्यम् आदधाति वाङ्मयामृतप्रवाहं**

धारयतीत्यर्थः। डिण्डिमानामित्यादरे बहुवचनम्। मुखं निःसरणे वक्त्रे प्रधानोपाययोरपीति विश्वः। लहरी धोरणी धारेति विश्वः।।

**Eng. Trans.**—If each of the quarters of a stanza contains four *ya*s, then the metre is called *Bhujaṅgaprayāta*.(33)

**अथ तोटकमाह सयुग्मयुगम्।। 34।।**

**रविरुद्रपितामहविष्णुनुतं**
**हरिचन्दनकुङ्कुमपङ्कयुतम्।**
**मुनिवृन्दगणेन सदा नमितं**
**तव नौमि सरस्वति पादयुगम्।। (सरस्वतीस्तोत्र, 1)**

अन्वयः— हे सरस्वति! रविरुद्रपितामहविष्णुनुतं हरिचन्दनकुङ्कुमपङ्कयुतम् सदा मुनिवृन्दगणेन नमितं तव पादयुगं नौमि।

बालसुबोधिनी— अथेति। अथेति वृत्तान्तरारम्भे, यदि प्रतिपादं सयुग्मयुगं सगणचतुष्ट्यं भवति तत्तोटकवृत्तमाह।

उदाहरणं रविरुद्रेति। हे सरस्वति! तव भवत्याः पादयुगं चरणयुगलं नौमि; कीदृशं रविरुद्रपितामहविष्णुनुतं तत्तन्नामकदेवैः स्तुतं तथा हरिचन्दनकुङ्कुमपङ्कयुतं हरिचन्दनं देववृक्षः कुङ्कुमञ्च तयोः पङ्केन युतम्। मन्दारः पारिजातश्च पुंसि वा हरिचन्दनमित्यमरः। तथा मुनिवृन्दगणेन मुनीनां बहुलसंहत्या सदा नमितं सेवितम्। इडागमस्त्वार्षः। यद्वा नमनं नमः क्वचिदन्यत इत्यल् प्रत्ययः। ततस्तत् करोतीत्यादीणन्तात् कर्मणि क्त प्रत्यये रूपम्। यद्वा दानेन सह वर्तते इति सदानं यथा भवत्येवम् इतं पूजितमिति श्रितादित्वाद्द्वितीया समासः। अथवा आणम् आप्राणं यावत् सत् साधु यथा भवत्येवम् इतम्; अतो यावत् प्राणानिदं सेव्यमिति निश्चयीकृतमित्यर्थः।।

**Eng. Trans.**—When each of the quarters of a stanza contains four *sa*s, the metre is termed as *Toṭaka*.(34)

**स्याच्चतुरेफकैर्भूषिता स्रग्विणी।। 35।।**

**अङ्गनामङ्गनामन्तरा माधवो**
**माधवं माधवं चान्तरा चाङ्गना।**
**इत्थमाकल्पिते मण्डले मध्यगः**
**संजगौ वेणुना दैवकीनन्दनः।।**

अन्वयः— अङ्गनाम् अङ्गनाम् अन्तरा माधवः माधवं माधवं च अन्तरा अङ्गना इत्थम् आकल्पिते मण्डले मध्यगः दैवकीनन्दनः वेणुना संजगौ।

बालसुबोधिनी— स्यादिति। यदि प्रतिपादं चतुर्भिः रगणैः भूषितं भवति सा स्रग्विणी वेदितव्या।

उदाहरणम् अङ्गनेति। अङ्गनाम् अङ्गनाम् अन्तरा गोपस्त्रियोर्मध्ये माधवः कृष्णः। तथा माधवं माधवम् अन्तरा माधवयोर्मध्ये अङ्गना गोपस्त्री। इत्थम् आकल्पिते रचिते मण्डले राससंज्ञकनृत्ययुक्ते बहुजनसमूहे मध्यगः सन् दैवकीनन्दनः वेणुना संजगौ गायति स्म। अङ्गनामित्याद्यभितः परित इत्यादि-नान्तराशब्दयोगे द्वितीया। विशेषाश्चाङ्गना भीरुरित्यमरः। स्यान्मण्डलं द्वादशराजके च देशे च विम्बे च कदम्बके च। कुष्ठप्रभेदेऽप्युपसूर्यके च, भुजङ्गभेदे गुणिमण्डली स्यादिति विश्वः।।

**Eng. Trans.**—When there exist four *ra*s in each of the quarters of a stanza, the metre is styled *Sragviṇī* (35).

**प्रमिताक्षरा भवति साज्जससैः।। 36।।**

**प्रतिकूलतामुपागते हि विधौ**
**विफलत्वमेति बहु साधनता।**
**अवलम्बनाय दिनभर्त्तुरभू-**
**न्न पतिष्यतः करसहस्त्रमपि।। (शिशुपालवध - 9/6)**

अन्वयः— विधौ प्रतिकूलताम् उपागते (सति) बहु साधनता विफलत्वम् एति, पतिष्यतः दिनभर्त्तुः करसहस्त्रमपि अवलम्बनाय न।

बालसुबोधिनी— प्रमिताक्षरेति। यदि प्रतिपादं सात् सगणात् परैः जससैः युक्तं भवति सा प्रमिताक्षरा वेदितव्या।

उदाहरणं प्रतिकूलतामिति। दिनभर्त्तुः आदित्यस्य पतिष्यतः अधोगमिष्यतः करसहस्त्रमपि कराणां सहस्त्रमपि अवलम्बनाय आश्रयाय नाभूत्। अन्यस्य पतिष्यतः हस्तद्वयमेवावलम्बनाय भवति, अस्य तु करसहस्त्रमपि न किमप्यवलम्बितुमित्यपि शब्दार्थः। वलिहस्तांशवः करा इत्यमरः। कथमित्याह— हि यस्माद् विधौ दैवे प्रतिकूलतामुपागते परिपन्थिभावं प्राप्ते सति बहुसाधनता बहूपायता विफलत्वमेति।

''साधनं निवृत्तौ मेढ्रे सैन्यसिद्धौ वधे गते। उपाये मृतसंस्कारे दापनेऽर्थागमे धने'' इति विश्वः।।

**Eng. Trans.**—If the *gaṇa*s in each quarter of a stanza are *sa, ja, sa* and *sa,* the metre is then called *Pramitākṣarā*.(36)

अथ यमुनां* ब्रुवते नजौ जरौ।। 37।।
अयि विजहीहि दृढ़ोपगूहनं
त्यज नवसङ्गमभीरु वल्लभे।
अरुणकरोद्गम एष वर्त्तते
वरतनु सम्प्रवदन्ति कुक्कुटाः।।

अन्वयः— अयि अभीरु वल्लभे! दृढ़ोपगूहनं विजहीहि; नवसङ्गं त्यज। हे वरतनु, कुक्कुटाः सम्प्रवदन्ति, (अतः) एषः अरुणोद्गमः वर्त्तते।

बालसुबोधिनी— अथेति वृत्तान्तरारम्भे। यदि प्रतिपादं नजौ नगणजगणौ ततः जरौ जगणरगणौ च स्युः, तां यमुनां ब्रुवते वदन्ति।

उदाहरणमयि इति। कस्यचित् पुरुषस्य कामिनीं प्रति वाक्यमिदम्। अयीति सम्बोधने। हे अभीरु! पापाभीते! वल्लभे! प्रिये! दृढ़ोपगूहनं कण्ठादौ गाढालिङ्गनं विजहीहि त्यज। तत्कारणं नवसङ्गं पुनः सम्भोगानुरागञ्च त्यज। कुत इति चेत्तत्राह— यतः कुक्कुटाः प्रवदन्ति। ननु प्रवदन्तु नाम तेन किमिति ब्रुवानां प्रत्याह हे वरतनु। सुकुमाराङ्गि! एषः अयं अरुणकरोद्गमः सूर्यरश्मेः प्रकाशो वर्त्तते प्रभातं यातमित्यर्थः। प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षडिति दोषश्रवणाद् दिवामैथुनेन नः पापानीति स्वास्थ्यहानिश्चेति भावः।।

**Eng. Trans.**—When the *gaṇas* in each quarter are *na, ja, ja* and *ra,* the metre is then called *Yamunā*.(37)

द्रुतविलम्बितमाह नभौ भरौ।। 38।।
वदनसौरभलोभपरिभ्रमद्
भ्रमरसम्भ्रमसम्भृतशोभया।

* मालती इति छन्दोमञ्जर्याम्।

चलितया विदधे कलमेखला—

कलकलोऽलकलोलदृशान्यया।। (माघ - 6/14)

अन्वयः— वदनसौरभलोभपरिभ्रमद् भ्रमरसम्भ्रमसम्भृतशोभया चलितया अलकलोलदृशा अन्यया (नायिकया) कलमेखलाकलकलः विदधे।

बालसुबोधिनी— प्रतिपादं नगणभगणद्वयरगणाः यस्य स्युः तद्द्रुत-विलम्बितमाह।

उदाहरणं वदनेत्यादि। अन्यया कयाचिद् अङ्गनया चलितया चलितुमारब्धया कलमेखलाकलकलः कलमेखलायाः अव्यक्तमधुरशब्दयुक्तः काञ्च्याः कलकलः कोलाहलशब्दः विदधे कृतः। चलने हेतुमाह वदनेत्यादि— वदनस्य मुखस्य यत्सौरभं सौगन्ध्यं तत्र यो लोभः लिप्सा तेन परि सर्वतोभावेन भ्रमन्तः ये भ्रमरास्तेभ्यो यः सम्भ्रमः त्वरा भयम्वा तेन सम्भृताः सम्यग् धृताः शोभा यया तादृश्या। अत्र भ्रमरसम्भ्रमादेव चलनम्। कीदृश्या; अलकलोलदृशा अनेकभ्रमरबुद्ध्या अलकेषु चूर्णकुन्तलेषु लोले चञ्चले दृशौ नयने यस्याः तया। यद्वा भ्रमरं नाम विपरीतश्रृङ्गारमाह। तथा च श्रृङ्गारसागरे— यदारूढपदा नारी चक्रवज्जघनं यदि। भ्रामयेत् सततं रागाद् भ्रमरो नाम विस्मृत इति। श्रृङ्गारसर्वस्वेऽपि— बाहुभ्यां शरीरमालिङ्ग्य कुलालचक्रवज्जघनं भ्रामयेदिति। तथाहि— अन्यया चलितया सम्भ्रमात्तजघनया अतएव कलमेखलाकलकलः कृतः। कीदृश्या— वदनसौर-भलोभेन परिभ्रमन् भ्राम्यमानमुखो यो भ्रमरः कामुकः तस्य यः सम्भ्रमः आदरातिशयस्तेन सम्भृतशोभया। भ्रमरः कामुके भृङ्ग इति धरणिः। त्रयं सम्भ्रममिच्छन्ति भयसम्वेगमादरमिति च धरणिः। अतएवालकैः सलोले दृशौ यस्याः तादृश्या।।

**Eng. Trans.**—When there exist the *gaṇa*s namely *na, bha, bha* and *ra,* in every quarter of a stanza, the metre is styled *Drutavilambita*.(38)

**मोवा न्यग्वा जलधरमालाब्ध्यङ्गैः।। 39।।**

**दिव्यस्त्रीणां सचरणलाक्षारागा**

**रागायाते निपतितपुष्पापीड़ाः।**

**पीड़ाभाजः कुसुमचिताः साशंसं**

**शंसन्त्यस्मिन् सुरतविशेषं शय्याः।। (किरात - 5/23)**

अन्वयः— अस्मिन् सचरणलाक्षारागाः निपतितपुष्पापीड़ाः पीडाभाजः कुसुमचिताः दिव्यस्त्रीणां शय्याः रागायाते साशंसं सुरतविशेषं शंसन्ति।

बालसुबोधिनी— यदि प्रतिपादं प्राक् मगणः ततः वसंज्ञकनगणय-गणगुरुवर्णसंज्ञकाः सा जलधरमाला वेदितव्या। अब्ध्यङ्गैः अब्धयः चत्वारः अङ्गान्यष्टौ तैर्यतिरित्यर्थः।

उदाहरणं दिव्यस्त्रीणामिति। अस्मिन् स्वर्गादपि रम्ये हिमालये शय्यासुरतस्य मैथुनस्य विशेषं विपरीतरतामिति यावत् शंसन्ति प्रकटयन्ति। यतः पुरुषायितस्त्री शय्या एवम्विधा सम्पद्यन्ते। कीदृशं सुरतविशेषं साशंसं क्रीडार्थमागताना-मुर्वशीप्रभृतीनां देवस्त्रीणां प्रशंसावाक्यसहितम्। शय्याः कीदृश्य— दिव्यस्त्रीणां सचरणलाक्षारागा रागायते चरणलाक्षारागेण सह सहिताः तथा रागेनात्यन्ता-नुरागेनापाते शय्यायां शीघ्रोपवेशने सति निपतितपुष्पापीड़ाः निपतितानि यानि पुष्पाणि शिरोवस्थितकुसुममाला तान्येवापीड़ा आभरणानि यासां ताः। तथा पीड़ाभाजः पुरुषेण सह रतिविमर्दनेन पीड़िताः यतः कुसुमचिताः पुष्पनिर्मिताः।।

**Eng. Trans.**—When the *gaṇa*s in each quarter of a stanza are *ma, va, na, ya, ga* and va, and also there exists *yati* after the fourth and the eighth syllables, the metre is styled *Jaladharamālā*.(39)

नयुगरयुगनिर्मितं स्यात्ततम्* ।। 40 ।।
अखिलमिदममुष्य गौरीगुरो—
स्त्रिभुवनमपि नैति मन्ये तुलाम्।
अधिवसति सदा यदेनं जनै—
रविदितविभवो भवानीपतिः।। (किरात - 5/21)

अन्वयः— इदम् अखिलं त्रिभुवनम् अपि अमुष्य गौरीगुरोः तुलां न एति (इति) मन्ये; यत् एनं जनैः अविदितविभवः भवानीपतिः सदा अधिवसति।

बालसुबोधिनी— नयुगेत्यादि। यदि प्रतिपादं नगणद्वयरगणद्वयाभ्यां रचितं भवति तत् ततं वेदितव्यम्। केचिदिदमेव मन्दाकिनीमाचक्षते। ननररघटिता तु मन्दाकिनीति सूत्रमेव प्रमाणम्।

---

* मन्दाकिनीति छन्दोमञ्जर्याम्।

उदाहरणमखिलमित्यादि। इदम् अखिलं सर्वं त्रिभुवनम् अमुष्य गौरीगुरोः हिमालयस्य तुलां सादृश्यं नैति नैव गच्छतीति मन्ये सम्भावयामि। मन्येशब्दः उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश इति। तुला सादृश्यमानयोरिति मेदिनी। कुतोऽयं विकल्प इति चेत्तत्राह— यतः जनैः देवमनुष्यनागलोकैः अविदितः अज्ञातविभवोऽणिमाद्येश्वर्यं यस्य तादृशः भवानीपतिः शिवः सदा एनं हिमालयम् अधिवसति तिष्ठति। भवानीपतिपदोपन्यासात् भवान्यप्यधिवसतीत्यर्थः।।

**Eng. Trans.**—When two *na*s are followed by two *ya*s in each quarter of a stanza, the metre is then styled *Tata.*(40)

**रसस्थितिजसुद्वयोद्धतगतिः*।। 41।।**

**सनाकवनितं नितम्बरुचिरं**
**चिरं सुनिनदैर्नदैर्वृतममुम्।**
**महाफणवतोऽवतो रसपरा**
**परास्तवसुधा सुधाधिवसति।। (किरात - 5/27)**

अन्वयः— सनाकवनितं नितम्बरुचिरं सुनिनदैः नदैः वृतम् अमुम् अवतः महाफणवतः रसपरा परास्तवसुधा सुधा चिरम् अधिवसति।

बालसुबोधिनी— रसेति। यदि प्रतिपादं रसस्थितिजसुद्वया भवति सा उद्धतगतिः वेदितव्या। रसे स्थितिर्विश्रामो यस्याः, जसौ जगणसगणद्वयं यस्याः पश्चात् कर्मधारयः।

उदाहरणं सनाकेति। महाफणवतः सर्पान् अवतः रक्षकस्य शेषस्य नागराजस्येति शेषः। रक्षकत्वेन सम्बन्धिनी या सुधा अमृतम् अमुं हिमालयं चिरमधिवसति। कीदृशी सुधा रसपरा स्वादूत्कटा। तथापरास्तव सुधा परास्ता परित्यक्ता वसुधा पृथ्वी यया सा वसुधां परित्यज्यात्रैव तिष्ठतीत्यर्थः। अमुं कीदृशं सनाकवनितं स्वर्गाङ्गनायुक्तं तथा नितम्बरुचिरं नितम्बेन कटकेन रुचिरं मनोहरं सुनिनदैः सुघोषैः नदैः शोनादिभिः वृतं वेष्टितम्। अत्रायमाशयः— आदौ रक्षार्थं देवैरमृतं शेषाय समर्पितं तच्च नदैर्वृतत्वाद् दूरमवगाहः स्वर्गस्त्रीसहितत्वात् स्वर्गोपमा तेनात्रैव स्थापितमिति। महाफणशब्देनामृतरक्षणे समर्थता सूचिता।

* जलोद्धतगतिरिति छन्दोमञ्जर्य्याम्।

शेषाज्ञया सर्पा एवामृतं रक्षन्ति यतः अतएवोक्तमवत इति। सनागवनितामिति पाठे सर्पाङ्गनासहितम्। अथवा सुधाशब्देन भुजगभोजनममृतविशेषः।।

**Eng. Trans.**—When the *gaṇa*s in each quarter are *ja, sa, ja,* and *sa,* and *the Yati* lies after the sixth syllables, the metre is called *Uddhatagati*.(41)

म्नौ ज्रौ वस्त्रिदशयतिः प्रहर्षिणीयम्।। 42।।

सामोदा कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किशलयशालिनी लतानाम्।
साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम्।। (किरात - 7/38)

अन्वयः— सामोदाः कुसुमतरुश्रियः विविक्ताः किशलयशालिनी लतानां सम्पत्तिः अमराङ्गनोपभुक्ताः (सत्यः) साफल्यं ययुः, यया परेषाम् उपकुरुते सा लक्ष्मीः।

बालसुबोधिनी— म्नाविति। म्नौ मगणनगणौ ततः ज्रौ जगणरगणौ वः गुरुवर्णः यदि प्रतिपादमेते स्युः इयं प्रहर्षिणी ज्ञेया। त्रिभिर्दशभिश्च यतिर्यस्याः सा।

उदाहरणं सामोदेत्यादि। कुसुमतरुश्रियः कुसुमैरुपलक्षितानां तरूणां श्रियः शोभाः कर्त्र्यः अमराङ्गनोपभुक्ताः देवस्त्रीभिः कृतोपभोगाः सत्यः साफल्यं सप्रयोजनतां ययुः गतवत्यः। अथवा पुष्पप्रधानानां तरूणां सम्पदः। श्रीवेशरचना शोभा भारती शरलद्रवे। लक्ष्म्यां त्रिवर्गसम्पत्तिर्विद्योपकरणेषु चेति मेदिनी। कीदृशीः सामोदाः दिव्यगन्धसहिता अतएव विविक्ताः पूताः। ''विविक्तौ पूतविजनौ'' इत्यमरः। तथा किशलयैर्नवपल्लवैः शालिनीनां लतानां च सम्पत्तिः अमराङ्गनोपभुक्ता सती साफल्यं ययौ। सामोदा इति योज्यं ''येनैवलब्धे सम्बन्ध'' इति युक्तेः। अत्र हेतुमाह सैव लक्ष्मीर्भवति यया लक्ष्म्या लक्ष्मीवान् परेषामुपकुरुते। ययोपकर्त्तुं न शक्यते नैषा लक्ष्मीरित्यर्थः।।

**Eng. Trans.**—When the *gaṇas* in every quarter are *ma, na, ja, ra* and *va;* and the *Yati* exists after the third and the tenth syllables, the metre is called *Praharṣiṇī*.(42)

श्रुतिग्रहैः जरनजरा रुचिप्रदा* ।। 43 ।।

सरागया श्रुतघनघर्मतोयया
करাहतिध्वनितपृथूरुपीठया।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे।। (माघ - 17/2)

अन्वयः— सरागया श्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया मुहुर्मुहुर्दशनविलङ्घितोष्ठया रुषा प्रियतमया इव नृपाः भेजिरे।

बालसुबोधिनी— श्रुतिग्रहैरित्यादि। यदि प्रतिपादं जरनजराः जगणः गुरुवर्णनगणजगणरगणाः स्युः सा रुचिप्रदा ज्ञेया। श्रुतयश्चत्वारः ग्रहा नव तैर्यतिरित्यर्थः।

उदाहरणं सरागयेति। रुषा क्रोधेन नृपाः राजानः भेजिरे प्राप्ताः प्रियतमया भार्यया इव। रुषा कीदृश्या सरागया अरुणवर्णसहितया, प्रियतमापक्षे शृङ्गारानुरागसहितया। तथा श्रुतघनघर्मतोयया श्रुतं क्षरितं घनं निरन्तरं घर्मतोयं स्वेदजलं यया। पक्षे— सरागत्वादेव श्रुतं घर्मतोयं यस्यास्तया, अनेन स्वाम्यनुरागिणीति सूचितम्। कराहतिध्वनितपृथूरुपीठया कराहत्या हस्तताडनेन ध्वनितं शब्दितं पृथु विशालं उरु उन्नतं पीठं नृपासनं यया। पक्षे— कामोद्रेकतया करस्य स्वामिहस्तस्य आहत्या ईषत्ताडनेन ध्वनितं पृथु पीनं उरुरेव पीठं यस्याः। अथवा कराणां प्रदीपरत्नादिरश्मीनामाहतौ सत्यां प्रज्वालितायामिति यावत् हन्तेर्गत्यर्थत्वात्। ध्वनितं कृतं शब्दं पृथूरुपीठं यस्याः। अनेन विपरीतरतं सूचितम्। वलिहस्तांशवः करा इत्यमरः। सुरते हि कामुकाः प्रदीपं कुर्वन्तीति प्रसिद्धम्। उक्तञ्च कुमारे—"भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपा" इति। मुहुर्मुहुः बारम्बारं दशनविलङ्घितोष्ठया दशनविलङ्घितो दष्टः ओष्ठो यया। उपसर्गबलेन धातूनामनेकार्थत्वात्। पक्षे— यस्याः। अनेन रतकाल एव सूचितः।।

**Eng. Trans.**—Whenever the *gaṇas* in each quarter are *ja, ra, na, ja* and *ra,* and *the Yati* exists after the fourth and the ninth syllables, the metre is then termed as *Rucipradā*.(43)

ननवरयुगलैराह सीमाभिधाम्** ।। 44 ।।

इह दूरधिगमैः किञ्चिदेवागमैः

---

* रुचिरेति छन्दोमञ्जर्य्याम्।

** चन्द्रिकेति छन्दोमञ्जर्य्याम्।

सततमसुतरं वर्णयन्त्यन्तरम्।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम्।। (किरात - 5/18)

अन्वयः— इह असुतरम् अन्तरं दूरधिगमैः आगमैः किञ्चिदेव सततं वर्णयन्ति। (किन्तु) अति विपिनं दिग्व्यापिनम् अमुं परं पुरुषम् इव परं पद्मयोनिः वेद।

बालसुबोधिनी— ननवेति। यदि प्रतिपादं नयुगगुरुवर्णरयुगलैर्युक्ता भवति तां सीमाभिधां प्राह कथयति।

उदाहरणमिहेति। इह हिमालये अन्तरं प्रदेशं दूरधिगमैः दुःखेन ज्ञेयैः दुर्बोधाभिप्रायैर्वा आगमैः शास्त्रैः किञ्चिदल्पमेव वर्णयन्तीत्यन्वयः। कीदृशम् अन्तरं— सततं सर्वदा असुतरं दुर्गमम्। यस्मादसुतरं तस्मात् किञ्चिदेव वर्णयन्तीत्यर्थः। तर्ह्येनं कोऽपि न जानातीति चेत्तत्राह— अमुं हिमालयं परं केवलं पद्मयोनिः ब्रह्मैव वेद जानाति नान्यः कोऽपि। कीदृशम् अतिविपिनम् अतिशय-काननम्, अतएव दिग्व्यापिनं शिरः सहस्रेणावृतत्वाद् दिङ्मण्डलं व्याप्य स्थिरम्। अत्रोपमानमाह— परं पुरुषं परमात्मानमिव। यथा परं पुरुषं पद्मयोनिरेव वेद नान्यस्तथामुमपि। पुरुषं कीदृशं सततं सर्वदा अतिविपिनं संसारवनमतिक्रम्य स्थितं दिग्व्यापिनं परमात्मरूपेण जगद्व्यापकम्। अतएव दुरधिगमैः आगमैः पुराणादिभिः इह संसारे परमपुरुषस्यान्तरं नामकर्मादीनामनन्तत्वादन्तरमित्युक्तम्। तथा चोत्पलिन्याम्— अन्तरस्तु प्रदेशे स्यादवसयेऽन्तरात्मनि। परिधाने तथा मध्ये भेदमर्यादयोरपीति।।

**Eng. Trans.**—If there exist the *gaṇa*s namely *na, na, va, ra* and *ra,* in each quarter, the metre is then styled *Sīmābhidhā*.(44)

मोवा भत्याः सिन्धुयतिर्मत्तमयूरः।। 45।।

दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः।
सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते।। (किरात - 18/28)

अन्वयः— यः प्रेक्षाकारी दृश्यानि दृष्ट्वा आचरणीयानि विधाय सम्यग्दृष्टिः

त्वां पश्यति, सः अपायैः मुक्तं तस्य परं पदं याति; यश्च (त्वां) साधु (यथा स्यात्तथा) उपास्ते, विधेयं विधत्ते (सोऽपि परं पदं याति)।

बालसुबोधिनी— मोवेति। यदि प्रतिपादं मोवाभत्याः मगण-वसंज्ञक-भगण-तगण-यगणाः स्युः स मत्तमयूरः वेदितव्यः। सिन्धवः चत्वारः, तत्र प्रथमा यतिः, द्वितीया तु पादान्ते प्रागुक्तवचनात्। श्लोकाभिप्रायेन पुंस्त्वम्।

उदाहरणं दृष्ट्वेत्यादि। यः प्रेक्षाकारी पण्डितः दृश्यानि योगशास्त्रानि दृष्ट्वा समालोच्य आचरणीयानि अनुष्ठेयानि च विधाय कृत्वा अतएव सम्यग्दृष्टिः अद्वितीयज्ञानवान् सर्वभूतेषु समदृष्टिरित्यर्थः। त्वां सर्वभूतमयं पश्यति स अपायैः पुनः पातैः मुक्तं रहितं तस्य तव योगशास्त्रप्रसिद्धस्य विज्ञः परम् उत्कृष्टं पदं धाम याति। यश्च त्वां साधु यथा स्यात्तथैवमुपास्ते पञ्चरात्राद्युक्तमार्गेन सेवते, सेवित्वा च विधेयं विधातुं योग्यमहिंसादिकं विधत्ते अनुतिष्ठति, सोऽपि परं पदं यातीति सम्बन्धः।।

**Eng. Trans.**—If the *gaṇa*s in a quarter are *ma, va, bha, ta* and *ya;* and the *Yati* exists after the fourth syllable, then the metre is called *Mattamayūra*.(45)

**ज्ञेयं वसन्ततिलकं तभजाज्जगौ गः।। 46।।**

**आरभ्यते न खलु विघ्नभयेन नीचैः**

**प्रारभ्य विघ्नविहता विरमन्ति मध्याः।**

**विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः**

**प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति।।**

अन्वयः— नीचैः विघ्नभयेन खलु (कर्म) न आरभ्यते, मध्याः (कर्म) आरभ्य विघ्नविहताः विरमन्ति; विघ्नैः पुनः पुनः प्रतिहन्यमाना अपि उत्तमगुणाः त्वमिव प्रारब्धम् उद्वहन्ति।

बालसुबोधिनी— ज्ञेयमिति। यदि प्रतिपादं तभजात् परौ जगौ जगण-गगणौ ततः गः गुरुवर्णश्च स्युः तद्वसन्ततिलकं ज्ञेयम्।

उदाहरणमारभ्येति। नीचैः प्राकृतपुरुषैः विघ्नभयेन भवितव्यविघ्नशङ्कया खलु निश्चये नैवारभ्यते कर्मेत्यध्याहार्यम्। मध्याः मध्यमगुणयुक्ताः प्रारभ्य

कर्मण्युद्योगं कृत्वा विघ्नविहता विघ्नैः कृतोद्योगभङ्गाः सन्तः विरमन्ति त्यजन्ति। "व्याङ्परिभ्यो रमः" इति परस्मैपदम्। उत्तमा उत्तमगुणयुक्ताः जनाः विघ्नैः पुनः पुनः प्रतिहन्यमाना अपि विघ्नव्युहेन विघ्नितोद्योगा अपि प्रारब्धं कृतावश्यकं कर्म, उद्वहन्ति समापयन्ति; उत्तमेषूपमानं त्वमिति। कञ्चिद्राजानं प्रति चाटुकारस्य वचनमिदम्। अत्र भिन्नवचनयोरप्युपमेयता "प्राणा इव प्रियोऽयन्मे" इतिवत्।।

**Eng. Trans.**—When the *gaṇa*s in each quarter of a stanza, are *ta, bha, ja, ja, ga* and *ga,* the metre is termed *Vasanta-tilaka.*(46)

सम्बाधा स्यात् मवननमवसम्बद्धा चेत्।। 47।।

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्त्रै-
रानीलाभैर्विरचितपरभागा रत्नैः।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येणी-
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया।। (किरात-5/31)

अन्वयः— इह अशिशिररश्मेः उस्त्रैः मुहुः उच्छ्रायं नीता, रत्नैः आनीलाभैः विरचितपरभागा हंसश्येणी स्फटिकरजतभित्तिच्छाया अह्नः मध्येऽपि ज्योत्स्नाशङ्कां वितरति।

बालसुबोधिनी— सम्बाधेति। यदि प्रतिपादं मवननमवैर्मगणवसंज्ञकनद्वयैः पुनः मगणवसंकैः या सम्बद्धा ग्रथिता स्यात् सा सम्बाधा ज्ञेया।

उदाहरणं नीतेति। इह मन्दरगिरौ स्फटिकरजतभित्तिच्छाया स्फटिकस्य रजतस्य च भित्तेः कुड्यस्य छाया कान्तिः अह्नः दिवसस्य मध्येऽपि ज्योत्स्नाशङ्कां कौमुदीसंशयं वितरति विदधति। छाया सूर्यप्रियाकान्तिप्रतिविम्बमनातप इत्यमरः। कीदृशी छाया। अशिशिररश्मेः सूर्यस्य उस्त्रैः किरणैः कर्तृभिः मुहुः पुनः पुनः उच्छ्रायम् उन्नतिं नीता प्रापिता। तथा रत्नैः नीलमणिभिः विरचितः परभागः शोभातिशयो यस्याः। "परस्परन्तु या कान्तिः परभागः स कथ्यते" इति धरणिः। कीदृशैः— आ ईषत् नीला कृष्णा आभा येषां तैः। कीदृशी— हंसश्येणी हंसवत् शुक्ला। श्येनेति लोहितश्वेतहरितेत्यादिना तस्य नः।।

**Eng. Trans.**—If in a quarter there exist the *gaṇas* namely *ma, va, na, na, ma* and *va,* the metre is then styled *Sambādhā.*(47)

ननगवररवाश्चेन् मालिनी मन्मथाश्वैः।। 48।।
उषसि गुरुसमीपे लज्जमाना मृगाक्षी
रतिरुतमनुकर्त्तुं कीरराजे प्रवृत्ते।
तिरयति शिशुलीलानर्त्तनच्छद्मताल-
प्रचलवलयमालास्फालकोलाहलेन।।

अन्वयः— उषसि कीरराजे रतिरुतम् अनुकर्त्तुं प्रवृत्ते (सति) गुरुसमीपे लज्जमाना मृगाक्षी शिशुलीलानर्त्तनच्छद्मतालप्रचलवलयमालास्फालकोलाहलेन (कीराणुकृतं) तिरयति।

बालसुबोधिनी— ननगेति। यदि प्रतिपादं ननगवररवाः नद्वयगुरुवर्णव-संज्ञकरद्वयवसंज्ञकाः स्युः सा मालिनी वेदितव्या। मन्मथा अष्टौ अश्वाः सप्त तैर्यतिरित्यर्थः।

उदाहरणमुषसीति। उषसि प्रभाते गुरुसमीपे श्वशुरादेः सविधे रतिरुतं रतौ सुरतकाले स्त्रीपुंसः सङ्गमकाले रुतं केनाप्यानन्देन जातं स्त्रीविषयक-दात्युहादिशब्दवदव्यक्तध्वनितं कीरराजे पालितशुकश्रेष्ठे अनुकर्त्तुं तदनुरूपेण पठितुं प्रवृत्ते प्रारम्भे सति मृगाक्षी काचिद्धरिणनयना रमणी तिरयति च्छादयति रतिरुतमिति योज्यम्। विदग्धाः स्त्रियो हि सुरतावसरेण सुखवृद्ध्यर्थं रतिशास्त्रोक्त पारावतादिशब्दवत् शब्दं कुर्वन्तीति। तदुक्तं नागरसर्वस्वे— "दात्युहपारावतसारसानां नादं विदध्यात् सुरतावसान" इति। "कोकिलकलरवकूजितये"ति जयदेवः। कीरशुकौ समावित्यमरः। केनेति चेत्रत्राह शिशुलीलानर्त्तनछद्मतालप्रचलवलय-मालास्फालकोलाहलेन— शिशोः बालकस्य यत् लीलानर्त्तनं तस्य छद्मना व्याजेन यस्तालः करयोस्ताडनं तेन प्रचलानां चञ्चलानां वलयमालानां आस्फालेन उच्चलितेन यः कोलाहलः झनत्कारशब्दः तेन तिरयति ढक्कीकरोति। नर्त्तनमितीनन्तादनट्। तिरयतीति तिरःशब्दात्तत् करोतीत्यादिना इस्तस्यस्वरादिलोपे भुवादित्वादनिरूपम्। कटकं वलयोऽस्त्रियामित्यमरः।।

**Eng. Trans.**—When the *gaṇa*s in each quarter of a stanza are *na, na, ga, va, ra, ra* and *va,* and the *Yati* exists after the eighth and the seventh syllable, the metre is called *Mālinī*. (48)

प्रमाणिकाद्वयं यदा तदा महाप्रमाणिका* ।। 49 ।।

जगद्विलक्षणेक्षणे क्षणे क्षणे मदीयकं
कदम्वकोरकद्वयं न गोपि गोपितं कुरु।
इदं निगद्य राधिका पयोधराम्बरं हरन्
कलिन्दनन्दिनीतटे ननन्द नन्दनन्दनः।।

अन्वयः— "हे जगद्विलक्षणेक्षणे! गोपि! क्षणे क्षणे मदीयकं (इदं) कदम्बकोरकद्वयं गोपितं न कुरु" इदं निगद्य राधिकापयोधराम्बरं हरन् कलिन्दनन्दिनीतटे नन्दनन्दनः ननन्द।

बालसुबोधिनी— प्रमाणिकेति। जरौ लगौ प्रमाणिकेतिलक्षणलक्षित-प्रमाणिकाद्वयं यदि प्रतिपादं भवति सा महाप्रमाणिका वेदितव्या।

प्रमाणं जगदित्यादि। हे जगद्विलक्षणेक्षणे! अतिसौकुमार्य्यात् जगतो विलक्षणे ईक्षणे चक्षुसी यस्याः सा तत्सम्बोधनं हे गोपि! राधिके! कदम्बकोरकद्वयं तत्सदृशाभिनवपयोधरयुगलं गोपितं वस्त्रावृत्तं मा कुरु। गिरां वैदग्ध्यार्थमिदमुक्तम्। यद्वा मलयजपङ्कलिप्ततया धूसरितत्वात् प्रथमप्रभवत्वाच्च तथोक्तम्। कीदृशं क्षणे क्षणे सर्वदा सुरतोत्सवे वा मदीयकं ममैव क्रीड़ासाधनम्। अतो यदि त्वं गोपयसि तर्हि त्वं चौरतुल्यासीत्याशयः। गोपीति गोपचतुरता दर्शिता। "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण" इत्यमरः। इदं निगद्य एतद्वचनमुक्त्वा राधिकापयोधराम्बरं राधिकायाः पयोधरयोः अम्बरं वस्त्रं हरन् दूरीकुर्वन् कलिन्दनन्दिनीतटे यमुनातीरे नन्दनन्दनः श्रीकृष्णः ननन्द शृङ्गाररसेन क्रीडितवान्।।

**Eng. Trans.**—When a quarter of a verse comprises two quarters of a stanza in the metre *Pramāṇikā,* the (new) metre is called *Mahāpramāṇikā.*(49)

रसेशानस्थाना यमनसभलैर्गः शिखरिणी।। 50।।

महिम्नः पारन्ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्ना त्वयि गिरः।



* पञ्चचामरमिति छन्दोमञ्जरीकारः।

अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः।।

(गन्धर्वकृतमहिम्नस्तोत्रम्)

अन्वयः— हे हर! ते महिम्नः परं पारं अविदुषः स्तुतिः यदि असदृशी तद्ब्रह्मादीनामपि गिरः त्वयि अवसन्ना, अथ स्वमतिपरिणामावधि गृणन् सर्वः अवाच्यः (अतएव) ममापि स्तोत्रे एषः परिकरः निरपवादः (स्यात्)।

बालसुबोधिनी— रसेशानेति। यस्याः प्रतिपादं यमनसभलैः यगण-मगण-नगण-सगण-भगणलघुवर्णाः गश्च स्युः सा शिखरिणी वेदितव्या। रसाः षट् ईशानाः एकादश, तेषु स्थानं स्थितिर्यस्याः तैर्यतिरित्यर्थः।

उदाहरणं महिम्न इति। हे हर! महादेव! ते तव महिम्नः चराचरप्रपञ्चेश्वर-भावस्य परं निर्मलज्ञानस्वरूपं पारम् अन्तम् अविदुषः पुरुषस्य इयं स्तुतिः यदि असदृशी अयोग्या स्यात् तव गुणानामुचिता न भवतीत्यर्थः। तत् तदा ब्रह्मादीनामपि गिरः स्तुतिवाचः त्वयि विषये अवसन्ना अवधिमप्राप्य मान्द्यं गताः। अथ ब्रह्मादीनामपि तव महिम्नः स्वरूपाख्यानेऽपर्याप्तत्वाद्धेतोः स्वमतिपरिणामावधि स्वकीयज्ञानपरिपाकव्यवच्छेदं यथा भवति एवं गृणन् स्तुवन् सर्वः जनः अवाच्यः अनिन्द्यः स्यात्। अतएव अस्मिन् स्तोत्रे क्रियमाने ममापि एषः परिकरः आरम्भः सामग्री वा निरपवादः अनिन्द्यः अस्तु— ममापि स्वमतिपरिणामावधिस्तूय-मानत्वादनिन्द्यो भवेदित्यर्थः। एतेन यावती ज्ञाननिष्ठा तदवधिना स्तोतव्यमित्यर्थः, परिकरः परिच्छेदे सामग्र्यारम्भयोरपीति कोषः।।

**Eng. Trans.**—If the *gaṇa*s in every quarter are *ya, ma, na, sa, bha, la,* and *ga;* and the *yati* exists after the sixth and the eleventh syllable, then the metre is called *Śikhariṇī*.(50)

वसुस्थितिजसद्वयं यलवयोगिपृथ्वी मता।। 51।।

अकालघनमण्डली किरतु नाममुक्तावली-
मपर्वणि विधुन्तुदस्तुदतु नाम शीतद्युतिम्।
इदन्तु बहुमन्महे यदनपायि विद्युल्लता
विलम्बिकनकाचलद्वयमधो मुखं नृत्यति।।

अन्वयः— अकालघनमण्डली मुक्तावलीं किरतु नाम, विधुन्तुदः शीतद्युतिं

अपर्वणि तुदतु नाम; तु इदं बहुमन्महे यद् अनपायि विद्युल्लता विलम्विकनका-चलद्वयम् अधोमुखं नृत्यति।

बालसुबोधिनी— अकालघनमण्डली स्वातीनक्षत्रव्यतिरिक्तान्य-कालस्थमेघसमूहः मुक्तावलीं किरतु मुक्तास्फोटमुखे पतित्वा मुक्ताफलश्रेणीं जनयतु नाम नैतदाश्चर्यम्; स्वातीनक्षत्रे हि ताम्रपर्णीसमुद्रयोः सङ्गमे सूक्तिषु पतितं वृष्टिजलं मुक्ताफलं भवतीति प्रसिद्धम्। तथा अपर्वणि पूर्णिमाप्रतिपत्सन्धि-व्यतिरिक्तपर्वणि प्रतिपदादौ विधुन्तुदः राहुः शीतद्युतिं चन्द्रं तुदतु ग्रसतु नाम नैतदप्याश्चर्यम्; पूर्णिमाप्रतिपत्सन्धौ हि राहुश्चन्द्रं ग्रसतीति ज्योतिःशास्त्रप्रसिद्धम्। तु किन्तु इदं बहु यथा भवति एवं मन्महे आश्चर्यं मन्यामहे। किन्तदिति चेत्तत्राह— कनकाचलद्वयं सुवर्णपर्वतद्वयम् अधोमुखं नृत्यति; यत्तदेव कीदृशं अनपायि-विद्युल्लताविलम्वि अनपायिनी विश्लेषशून्या या विद्युल्लता तस्या विलम्वः लम्वनं विद्यतेऽस्मिन्निति। तथा विद्युल्लताया अनपायित्वसम्भवात्, गिरेश्चाधोमुखेन नृत्यासम्भवादाश्चर्यम्। वस्तुतस्तु, अनपायिविद्युल्लतासुवर्णहारावलम्विकनक-गिरिवदतिकठिन- गौरवर्णस्तनद्वयमधोमुखं नृत्यति। विपरीतरतौ सिंहलीननामबन्ध-विशेषः। उक्तः— लिङ्गोपरि स्थिता नारी कान्तोरौ तत्पदद्वयं हृदये दत्तहस्ता च सिंहलीनोऽ- प्ययं स्मृतः। केचित्तु अनपायिविद्युल्लतातुल्या वाराङ्गनेत्याहुः।।

**Eng. Trans.**—When the *gaṇas* in every quarter are *ja, sa, ja, sa, ya, la* and *va;* and the *yati* is after the eighth syllable, the metre is styled *Pṛthvī*.(51)

**मन्दाक्रान्ता मभनततगा वेन वेदर्त्तुलोकैः।। 52।।**

**जातं वंशे भुवनविदिते पुष्करावर्तकानां**
**जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः।**
**तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं**
**याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा।। (पूर्वमेघ-6)**

अन्वयः— भुवनविदिते पुष्करावर्तकानां वंशे जातं त्वां मघोनः कामरूपं प्रकृतिपुरुषं जानामि, तेन विधिवशाद् दूरबन्धुः अहं त्वयि अर्थित्वं गतः; अधिगुणे याच्ञा मोघा (अपि) वरम्, अधमे लब्धकामा (अपि न वरम्)।

बालसुबोधिनी— मन्दाक्रान्तेति। यदि प्रतिपादं वेन वसंज्ञकेन सह मभनततगाः मगण-भगण-तगणद्वयगुरुवर्णाः स्युः सा मन्दाक्रान्ता ज्ञेया। वेदाश्चत्वारः ऋतवः षट् लोकाः सप्त तैर्यतिरिति।

उदाहरणं जातमिति। मेघं प्रति यक्षवाक्यम्— हे जलद! पुष्करावर्तकानां मेघानां वंशे जातं समुत्पन्नं त्वामहं जानामि। तथा चोक्तम्— पुष्करावर्त-शंखाह्वकालकर्णिजलप्लवा। इति वारिमुचां वंशश्चतुर्धा परिकीर्तित इति। कीदृशे वंशे भुवनविदिते सर्वत्र ख्याते। कीदृशं त्वां मघोनः इन्द्रस्य प्रकृतिपुरुषं मन्त्रिणं* ''स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतय'' इत्यमरः। एतेन शचीपतिसहायतया महनीयमाहात्म्यमस्य व्यनक्ति। तथा कामरूपं स्वेच्छाधीना-कारम्। एतेन तव न किञ्चिद्दुष्करमिति ध्वनितम्। तेन एतावता महाजनत्वेन त्वयि विषये अर्थित्वं याचकत्वं गतः प्राप्तः। कीदृशोऽहं— विधिवशात् दैवगत्या दूरबन्धुः दूरे बन्धुः प्रिया यस्य। ननु तर्ह्यन्यः कोऽपि सन्निहितः वाच्यतां कथमहं महाजनस्तव वियोगवार्ताः व्याहरिष्यामीत्याशङ्क्याह अधिगुणे श्रेष्ठे याच्ञा प्रार्थना मोघापि विफलापि वरं मनागिष्टम्। मनागिष्टे वरं यच्च कश्चिदाह तदव्ययमिति कोषः। अधमे नीचे याच्ञा लब्धकामापि प्राप्ताभिलाषापि न वरमित्यर्थः। अत्र च तुङ्गपदास्थिता मन्दा अपि याच्यन्ते त्वं महाजनत्वेनैव मम प्रार्थितोपकारं नूनं न विफलीष्यसीत्याशयः।।

**Eng. Trans.**—When every quarter of a stanza contains the *gaṇa*s namely *ma, bha, na, ta, ta, ga* and *va;* and *yati* exists after the fourth, the sixth and the seventh syllables, the metre is called *Mandākrāntā*.(52)

**भवति हरिणी नस्म्वा जौ गो रसश्रुतिः सप्तभिः।। 53।।**

**उरसि निहितस्तारो हारः कृताजघने घने**
**कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ।**
**प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा**
**यदि किमधिकत्रासोत्कम्पं दिशः समुद्वीक्षसे।।**

---

* प्रकृतिपुरुषं प्रधानपुरुषमिति मल्लिनाथव्याख्यैव श्लाघ्या न तु मन्त्रिणमिति; यतः देवाधिपतेर्मेघस्य मन्त्रित्वमप्रसिद्धम्।

अन्वयः— हे मुग्धे! उरसि तारः हारः निहितः घने जघने कलकलवती काञ्चीकृता (त्वया) (तव) पादौ रणन्मणिनूपुरौ आहतडिण्डिमा त्वं एवं प्रियं अभिसरसि किम् अधिकत्रासोत्कम्पं दिशः समुद्वीक्षसे।

बालसुबोधिनी— भवतीति। नश्च सश्च मश्च वश्च नस्म्वा तेषां द्वन्द्वैक्यं ततो जौ जगणद्वयं ततो गः गुरुवर्णः यद्येते प्रतिपादं स्युः सा हरिणी भवति। रसाः षट् श्रुतयः चत्वारः सप्त च तैर्यतिः।

उदाहरणमुरसीति। तत्र सङ्केतस्थानगामिनीं कञ्चिदभिसारिकां प्रति सख्या वाक्यम्— हे मुग्धे! अविदग्धे। यद्येनं अनेन प्रकारेण प्रियं जारं अभिसरसि तर्हि आहतडिण्डिमा वादितवादि अत्रैवाभिसरसि, एवं चेदधिकत्रासोत्कम्पं अति-शयभयोत्कम्पं यथा भवति तथा दिशः किं कथं समुद्वीक्षसे पश्यसि। मुग्धौ वर्वरसुन्दराविति विश्वः। एवमित्यनेन गमनप्रकारमुक्तम्। मुग्धताञ्च दर्शयति उरसि वक्षसि तारः महाहारः निहितः अर्पितः। तथा घने निविड़े जघने कलकलवती कोलाहलयुक्ता काञ्ची मेखला कृता धृता। तथा पादौ चरणौ रणन्मणिनूपुरौ रणन्तौ मणिमयनूपुरौ यत्र तादृशौ कृतौ अतस्त्वमज्ञासीत्यर्थः।।

**Eng. Trans.**—Whenever the *gaṇas* in every quarter of a stanza are *na, sa, ma, va, ja, ja* and *ga,* and the *yati* lies after the sixth, the fourth and the seventh syllables, the metre is then called *Hariṇī*. (53)

**नजभजजा लगौ भवति नर्कटकाख्यमिदम्।। 54।।**

**जय जय जह्यजामजित दोषगृभीतगुणामित्यादि।**

बालसुबोधिनी— नजभजेति। यदि प्रतिपादं नजभजजाः नगण-जगण-भगणाः पुनः जद्वयः ततो लगौ लघुगुरुवर्णौ च स्युरिदं नर्कटकाख्यं वृत्तं भवति। उदाहरणं जयजयेति—

जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः।। (भागवत 10/87/14)



अयं श्लोकः शूद्रैरपाठ्यः वेदत्वात्। तद्यथा वाराहीतन्त्रे "न शूद्रैर्वैष्णवं

ग्राह्यं वेदाख्यागममेव च। न शूद्रस्याधिकारोऽस्ति पुराणनिगमात्मक'' इति। श्लोकार्थन्तु— भो अजित! जय जय उत्कर्षमाविष्कुरु, आदरे वीप्सा। केन व्यापारेण— अगजगदोकसां अगानि स्थिराणि जगन्ति जङ्गमानि ओकांसि शरीराणि येषां, तेषाम् अजाम् अविद्यां जहि नाशय, जीवानामविद्यानाशनव्यापारेणेत्यर्थः। ननु दोषवती कथं हन्तव्येत्याशयेनाह— दोषगृभीतगुणां दोषाय जीवानामा-नन्दाद्यावरणाय गृभीतगुणा यया। हृग्रहोर्भश्छन्दसीति हस्य भः। इयं स्वैरिणीर-परप्रतारणाय गुणान् गृह्णाति, अतो हन्तव्या। तर्हि मय्यपि दोषमावहेदिति ममापि तत्र एका शक्तिः स्यादत आह त्वमिति। यत् यस्मात् त्वमात्मनैव समवरुद्ध-समस्तभगः सम्प्राप्तसमस्तैश्वर्योऽपि वशीकृतमायत्वादिति भावः। ननु स्वयमेव ते जीवा ज्ञानवैराग्यादिना किं न हन्युरित्यत आह— हे अखिलशक्त्यवबोधक! येषां त्वमेवान्तर्यामी सर्वशक्त्यवबोधक अतो न ते ज्ञानादौ स्वतन्त्रा इति भावः। अहमकुण्ठज्ञानैश्वर्यादिगुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्याहन्तेत्यत्र किं प्रमाणमिति चेदहमेव प्रमाणमित्याह— क्वचिदपि कदाचित् सृष्टिसमये अजया मायया चरतः क्रीड़तः नित्यञ्चालुप्तभगतया सत्यज्ञानानन्तानन्दैकरसेनात्मना च चरतो वर्तमानस्य निगमो वेदः अनुचरेत् प्रतिपादमीयात्। कर्मणि षष्ठी।।

**Eng. Trans.**—That is called the metre *Narkaṭaka,* if each of the quarters of a stanza comprises the *gaṇa*s namely *na, ja, bha, ja, ja, la* and *ga.*(54)

दिङ्मुनिवंशपत्रपतितं भरणवननवैः।। 55।।
सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुसि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवाः शिखरमणिरुचः।।

(किरात – 5/43)

अन्वयः— इह विविधाः शिखरमणिरुचः सम्प्रति लघुनि क्षीणपयसि भिदां उपेयुसि जलधरपटले कथमपि शनकैः लब्धजन्म खण्डितविग्रहं बलभिदो धनुः पूरयितुं विभवः भवन्ति।

बालसुबोधिनी— दिङ्मुनीत्यादि। यदि प्रतिपादं भरणवननवैः भगण-रगण-नगण-वसंज्ञक-नद्वय-वसंज्ञकैः विशिष्टं तद्वंशपत्रपतितं नाम वृत्तं ज्ञेयम्। दिङ्मुनिभिश्च यतिरित्यर्थः।

उदाहरणं सम्प्रतीति। इह कैलाशे विविधाः नानावर्णाः शिखरमणिरुचः शृङ्गस्थमणिदीप्तयः बलभिदः इन्द्रस्य खण्डितविग्रहं खण्डखण्डीकृतदेहं धनुः कर्म पूरयितुं समग्रयितुं विभवः समर्थाः भवन्ति। खण्डने हेतुमाह— सम्प्रति शरदि वर्षान्तत्वात् क्षीणपयसि अतएव लघुनि जलधरपटले मेघवृन्दे भिदां खण्डतां उपेयुसि उपगते कथमपि लब्धजन्म लब्धं जन्म उत्पत्तिर्येन। एतेन शरदि मेघानां पूर्णत्वाभावात् शक्रधनुः सम्यक् न प्रकाशते। मणिरुचां सितपीतादित्वादिन्द्रस्य धनुषः शोभा भवतीत्यर्थः।

**Eng. Trans.**—When all the quarters of a stanza contain the *gaṇa*s namely *bha, ra, na, va, na, na* and *va;* and the *yati* exists after the tenth and the seventh syllables, the metre is called *Vaṁśapatrapatita*. (55)

**इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते।। 56।।**

**रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां**
**प्रियसुहृदि विभीषणे संक्रमय्य श्रियं वैरिणः।**
**रविसुतसहितेन तेनानुयातः स सौमित्रिणा**
**भुजविजितविमानराजाधिरूढ़ः प्रतस्थे पुरीम्।।**

**(रघुवंश - 12/104)**

अन्वयः— स रघुपतिः जातवेदोविशुद्धां प्रियां प्रगृह्य, प्रियसुहृदि विभीषणे वैरिणः श्रियं संक्रमय्य, रविसुतसहितेन तेन सौमित्रिणा अनुयातः भुजविजित-विमानाधिरूढ़ः पुरीं प्रतस्थे।

बालसुबोधिनी— इहेति। इह छन्दोग्रन्थे समवृत्ते वा यदि प्रतिपादं ननरचतुष्कनिर्मितं तन्नाराचमाचक्षते।

उदाहरणं रघुपतिरित्यादि। स रघुपतिः श्रीरामोऽपि जातवेदोविशुद्धां वह्निपरीक्षायामजातविक्रियां प्रियां सीतां प्रगृह्य स्वीकृत्य प्रियसुहृदि प्रियश्चा-सौ सुहृच्चेति तस्मिन् विभीषणे वैरिणः रावणस्य श्रियं राज्यसम्पत्तिं संक्रमय्य

स्थापयित्वा रविसुतसहितेन सुग्रीवयुक्तेत तेन सौमित्रिणा लक्ष्मणेन अनुयातः सन् पुरीम् अयोध्यां प्रतस्थे गतवान्। भुजविजितविमानराजाधिरूढ़ः भुजाभ्यां विजितं विमानराजं पुष्पकम् अधिरूढ़ः सन्।

**Eng. Trans.**—If each of the quarters of a stanza comprises two *na* s and four *ra* s, then the metre is styled *Nārāca*. (56)

अर्काश्वैर्यदि मः सजौ सुततवाः शार्दूलविक्रीडितम्।। 57।।
अंशासक्तकपोलवंशवदनव्यासक्तबिम्बाधर—
द्वन्द्वोदीरितमन्दमन्दपवनप्रारब्ध गीतध्वनिः।
ईषद्वक्रिमलोलहारनिकरः प्रत्येकरोकानन—
न्यञ्चद्व्यञ्चदुदञ्चदङ्गुलिचयस्त्वां पातु राधाधवः।

अन्वयः— अंशा.........गीतध्वनिः ईषद्वक्रिम.......निकरः प्रत्येकरोकानन न्यञ्चद्व्यञ्चदुदञ्चदङ्गुलिचयः राधाधवः त्वां पातु।

बालसुबोधिनी— अर्काश्वैरिति। यदि प्रतिपादमादौ मगणस्ततो सजौ ततः सुततवाः सगणतद्वयवसंज्ञकाः स्युस्तत् शार्दूलविक्रीडितं वेदितव्यम्। अर्काः द्वादश अश्वाः सप्त तैर्यतिरित्यर्थः।

उदाहरणमंशासक्तेति। राधाधवः श्रीकृष्णः त्वां पातु रक्षतु। कीदृशः, अंशे वामबाहुमूले आसक्तः कपोलः यस्य वंशस्य वदने मुखे व्यासक्तं समर्पितं यत् बिम्बाफलवदधरद्वन्द्वं ओष्ठयुगलं तेन उदीरितः प्रेरितः मन्दादपि मन्दः यः पवनः वायुः तेन प्रारब्धः गीतेषु गानेषु ध्वनिः निषादादिस्वरविभागः येन, स चासौ स चेति विग्रहे कर्मधारयः। तथा ईषद्वक्रिम्ना उपलक्षितः लोलश्चञ्चलः हाराणां निचयः समूहः यस्य। प्रत्येकरोकाननेषु प्रतिरन्ध्रमुखेषु न्यञ्चन् अधोगच्छन् चञ्चन् तिरोगच्छन् उदञ्चन् उर्द्धं गच्छन् अङ्गुलीनां चयः समूहो यस्य पश्चात् कर्मधारयः। न्यञ्चच्चञ्चदिति वा पाठः । अत्रापि स एवार्थः।

**Eng. Trans.**—Wherein there exist in every quarter of a stanza, the *gaṇa*s namely *ma, sa, ja, sa, ta, ta* and *va;* and the *yati* lies after the twelfth and the seventh syllables, it is then called *Śārdūlavikrīḍita*. (57)

रसास्वादाश्वैर्यो मुनसुररवैर्मेघविस्फूर्जितेयम्।। 58।।

उदञ्चत्कावेरीलहरीषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितेभाः।
अमी चैत्रे मैत्रावरुणितरुणिकेलिकङ्केल्लिमल्ली-
चलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः।।

अन्वयः— हे चण्डि! चैत्रे मैत्रावरुणि.........सुरभयः उदञ्चत् कावेरीलहरीषु परिष्वङ्गरङ्गे लुठन्तः कुहूकण्ठी ...... प्रोषितेभाः अमी वाताः चञ्चन्ति।

बालसुबोधिनी— रसास्वादैरिति। यदि प्रतिपादं मुनसुररवैः मगण-नगण-सगण-रद्वय-वसंज्ञकैः युक्तो यः यगणः भवति, इयं मेघविस्फूर्जिता वेदितव्या। रसाः षट् आस्वादा अपि षट् अश्वाः सप्त तैर्यतिः।

उदाहरणमुदञ्चदिति। हे चण्डि! कोपने! चैत्रे मासि अमी वाताः चञ्चन्ति गच्छन्ति। चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितीति मेदिनी। कीदृशाः वाताः— उदञ्चन्त्यः ऊर्द्ध्वं गच्छन्त्यः कावेर्य्याः नद्याः या लहरयः धाराः तासु परिष्वङ्गः मिथः आलिङ्गनं स एव रङ्गः क्रीड़ाभूमी तस्मिन् लुठन्तः आश्लिष्यन्तः। लुठ् विलुठने इत्यस्य रूपम्। शैत्यमुक्तम्। वायोर्हि शैत्यसौगन्ध्यमान्द्यमिति गुणत्रयं वर्ण्यते इति कवीनां समयः। लहरीधोरणी धारेति विश्वः। तथा कुहूरिति शब्दः कण्ठे यस्याः सा कुहूकण्ठी कोकिलपत्नी सैव कण्ठीरवः सिंहस्तस्य रवः शब्दः तस्य लवेन लेशेन त्रासितः भयं प्रापितः प्रोषितेभाः प्रवासिगजाः यैः। गजा अपि सिंहनादं श्रुत्वा विभ्यतीति ध्वनितम्। कोकिलानां मधुरशब्दद्वारा कामजनकत्वेन वध्य इत्वात् सिंहतुल्यता। प्रवासिनां कामभयाश्रयत्वेन गजतुल्यत्वम्। कुहूकण्ठीति स्त्रीलिङ्गनिर्देशः शब्दमाधुर्यसूचनाय। कण्ठीरवस्तु पारीन्द्रः केशरीगजमारण इत्यजयः। अनेन काननवासिकोकिलारावप्रापकत्वेन मान्द्यं सूचितम्। तथा मैत्रावरुणेः अगस्त्यस्य तरुण्याः लोपामुद्रायाः केलये क्रीडार्थमारोपितः कङ्केल्लिः अशोकः मल्ली मालती च चलद्वल्ल्यः अन्या अपि माधव्यादिलताः हल्लीसकम् आश्रमकृतगन्धर्वादिस्त्रीनृत्यं तैः सुरभयः सुगन्धयः। नारीणां मण्डलीनृत्यं बुधाः हल्लीसकं विदुरिति हारावल्याम्।

**Eng. Trans.**—If the *gaṇa*s in every quarter are *ya, ma, na, sa, ra, ra* and *va,* and the *yati* is after the sixth, then also

the sixth and the seventh syllables, then the metre is called *Meghavisphūrjitā*. (58)

सप्ताश्वास्वादभिन्नामरवननवताः सः सौम्यवदना* ।। 59।।

निश्चेयं नैगमानां चरमचरमिदं ब्रह्मैव न परं

श्रूयन्ते यातनास्ता अपि दूरितकृताः किञ्चाति विषमाः।

नैतद्वा नापि तद्वा घटत इति वचो नास्तिक्यविषयम्

गौरीजाने न जाने किमपि पुनरिदं जानन्ति सुधियः।।

अन्वयः— इदं नैगमानां निश्चेयं चरम् अचरं ब्रह्म एव परं, न किञ्चापि दूरितकृताः, ताः यातना अपि अतिविषयाः श्रूयन्ते। एतद् वा अपि न घटते, तद्वा अपि न घटते इति वचः नास्तिक्यविषयम्, (हे) गौरीजाने, एतत् किं सत्यं तदहं न जाने पुनः सुधियः जानन्ति।

बालसुबोधिनी— सप्तेति। यदि प्रतिपादं मरवननवताः मगण-रगण-वसंज्ञक-नद्वयाः पुनः वसंज्ञक-तगणौ ततः सगणश्च स्युः सा सौम्यवदना वेदितव्या। कीदृशी, सप्त च अश्वाश्च स्वादाः षट् तैः भिन्नाः विच्छेदं प्राप्ताः तैर्यतिरित्यर्थः।

उदाहरणं निश्चेयमित्यादि। तत्र कश्चिद्विरक्त आत्मनः संशयं व्यनक्ति— चरं जङ्गमम् अचरं स्थावरं तदिदं चराचरात्मकप्रपञ्चजातं ब्रह्मैव परं तद्भिन्नं नास्ति। किञ्चेति भिन्नार्थे। तथा चोक्तं— वा विकल्पोऽथवा पक्षे यद्वा गौणे ह विधीयते। किञ्चाति चास्ति भिन्नार्थे वादिर्नानार्थवाचक इति। दूरितकृता पापकृताः, ताः प्रसिद्धा यातनाः रौरवादितीव्रवेदना अपि श्रूयन्ते। कीदृशाः, अति विषमाः पापानुरूपा इति। नैगमानां वेदवाक्यानां निश्चेयं निर्णयः। एतद्वा चरमचरमिदं ब्रह्मेति वचनं न घटते। तद्वा श्रूयन्ते यातना इत्यपि वचनं न घटते इति वचो नास्तिक्यविषयम्। तथा च बौधागमः— सर्वथा लोकायतमेव शास्त्रं, यत्र प्रत्यक्षमेव प्रमाणं, पृथिव्यप्तेजो वायवस्तत्वानि, अर्थकामौ पुरुषार्थौ, भूतान्येव चेतयन्ते, नास्ति परलोकः, मृत्युरेवापवर्ग इति। हे गौरीजाने। गौरी जाया यस्य हे शम्भो! किं सत्यं तदहं न जाने, सुधियः पुनः पण्डितास्तु इदं जानन्त्येव। अपि अवधारणे। बहुव्रीहौ जायायाः जानिः।

---

* सुवदनेति छन्दोमञ्जर्याम्।

**Eng. Trans.**—That is called the metre *Saumyavadanā* wherein the *gaṇa*s in each quarter are *ma, ra, va, na, na, va, ta* and *sa;* and the *yati* lies after the seventh, then also the seventh and the sixth syllables. (59)

म्रौ वा नौ वाथ रौ वा प्रतिमुनिविरतिः स्रग्धराश्रव्यवृत्तम्।। 60।।

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे—
वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः।।

(मालतीमाधव - 1/2)

अन्वयः— शूलपाणेः ताण्डवे नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हित्रासात् भोगसङ्कोचभाजि फणिपतौ नासाग्ररन्ध्रं सानन्दं विशति गण्डोड्डीनालिमाला-मुखरितककुभः चीत्कारवत्यो वैनायक्यो वदनविधुतयो वः चिरं पान्तु।

बालसुबोधिनी— म्राविति। म्रौ मगणरगणौ ततः वा वसंज्ञकः ततः नौ वा नद्वयवसंज्ञकौ ततः रद्वयवसंज्ञकौ यदि प्रतिपादमेते स्युः सा सर्वकाव्यप्रसिद्धा स्रग्धरा वेदितव्या। प्रतिमुनौ प्रतिसप्ताक्षरे विरतिः यस्याः।

उदाहरणं सानन्दमिति। वैनायक्यः विनायकसम्बन्धिन्यः वदनविधुतयः मुखकम्पनानि वः युष्मान् पान्तु रक्षन्तु। कीदृश्यः चीत्कारवत्यः चीत्कारशब्दयुक्ताः। कदेत्यपेक्षायामाह— सानन्दं यथा भवत्येवं शूलपाणेः महादेवस्य ताण्डवे नृत्यनिमित्ते नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हित्रासात् नन्दिहस्तेनाहतः वादितः यः मुरजः वाद्यविशेषः तस्य रवेण शब्देन आहूतात् नृत्यदर्शनार्थमागतात् कुमारबर्हिणो मयूराद् यः त्रासः तस्मात् हेतोः फणिपतौ शिवालङ्कारभूते सर्पराजे भोगसङ्कोच-भाजि कायं सङ्कोचयन्नित्यर्थः। नासारन्ध्रं गजाननस्य नासाविवरं विशति सति। कीदृश्यः; मुखकम्पनेन हेतुना गण्डोड्डीनालिमालामुखरितककुभः गण्डाभ्यां उड्डीनाभिरुर्द्धगताभिः अलिमालाभिः भ्रमरश्रेणीभिः मुखरिताः ककुभः दिशो याभिः ताः।

**Eng. Trans.**—When the *gaṇa*s in each quarter of a stanza are *ma, ra, va, na, na, va, ra, ra* and *va;* and the *yati* exists after every seventh syllable, the metre is called *Sragdharā*. (60)

प्रथममिह हि दण्डकश्चण्डवृष्टिप्रपातो
भवेन्नद्वयेनाथ रैः सप्तभिः।
प्रतिपदमिह रेफवृद्ध्या स्युरर्णार्णवव्याल-
जीमूतलीलाकरोद्दामशंखादयः।। 61।।

बालसुबाधिनी— प्रथममिति। इह समवृत्तेषु, हीति प्रसिद्धौ, यदि प्रतिपादं नद्वयेन अथ अनन्तरं सप्तभिः रैः रगणैश्च युक्तो भवेत् सः चण्डवृष्टिप्रपातो नाम दण्डको वक्तव्यः। दण्डकभेदान् दर्शयति— इह दण्डके प्रतिपादं रेफवृद्ध्या अर्णादयो भेदाः स्युः। तथाहि— यदि प्रतिपादं न द्वयात्परैः अष्टाभिः रेफैर्युक्तो भवति, सोऽर्णनाम दण्डको वक्तव्यः। न द्वयादिति सर्वत्र। नवभिः अर्णवः। दशभिः व्यालः। एकादशभिः जीमूतः। द्वादशभिः लीलाकरः। त्रयोदशभिः उद्दामः। चतुर्दशभिः शंख इति।

**Eng. Trans.**—If there exist seven *gaṇa*s namely *ra,* after two *na*s, then it generates the *Daṇḍaka* called *Caṇḍavṛṣṭi-prapāta.* When there are eight *ra*s, after two *na*s, it is called *Arṇa*. If there exist, after two *na*s , nine *ra*s, then it is *Arṇava;* if ten *ra*s, it is *Vyāla;* if eleven *ra*s, it is *Jīmūta;* if twelve *ra*s, it is *Līlākara;* if thirteen *ra*s, it is *Uddāma;* and if there are fourteen *ra*s after two *na*s, it is then called *Śaṅkha*. (61)

प्रचितमिह नयुगात् यैस्तथा चण्डवृष्टि-
प्रपातादयः स्युर्यथा दण्डके रैः।। 62।।
उह्यमुदाहरणम्।

## समवृत्तानि समाप्तानि

बालसुबोधिनी— प्रचितमिति। इह समवृत्तेषु यथा दण्डके नयुगात् परैः रैः सप्ताष्टादिरगणैः चण्डवृष्टिप्रपातादयो भेदाः स्युः, नयुगात्परैः यैः प्रचितमपि— प्रचितोऽपि सप्ताष्टादियगणैः चण्डवृष्टिप्रपातादयो भेदाः स्युरित्यर्थः। तथा हि प्रतिपादं नयुगात्परैः सप्तभिः यगणैः चण्डवृष्टिप्रपातो नाम प्रचितं वक्तव्यम्। नयुगादिति सर्वत्र। अष्टभिः अर्णः। नवभिः अर्णवः। दशभिः व्यालः। एकादशभिः जीमूतः। द्वादशभिः लीलाकरः। त्रयोदशभिः उद्दामः। चतुर्दशभिः शंख इति। उदाहरणम् उह्यमिति। दण्डकादौ चतुरावृत्य उदाहरणं द्रष्टव्यमित्यर्थः।

इति श्रीकविपञ्चाननचक्रवर्त्तिविरचितवृत्तमालाटीकायां बालसुबोधिन्यां समवृत्तानि।

**Eng. Trans.**—As in *Daṇḍaka,* if, after two *nas*, there exist *yas* numbering from seven to fourteen, then there are the *Pracita* namely *Caṇḍavṛṣṭiprapāta* and etc. respectively. (62)

अथार्द्धसमवृत्तम्

उपचित्रमिदं ललितव्रता पूर्वपदं यदि दोधकमन्यत्।। 63।।

तरलाः क्व नु यान्ति ना दृष्टयो
वातपराहतमरसाक्षि।
तदपाङ्गशतांशमपि क्षणं
प्राप्य चिरादयमस्तु कृतार्थः।।

अन्वयः— हे वातपराहतमरसाक्षि! तरलाः दृष्टयः क्व नु न यान्ति, अयं चिरात् तदपाङ्गशतांशमपि क्षणं प्राप्य कृतार्थः अस्तु।

बालसुबोधिनी— अथार्द्धसममिति। अत्र युक्पादयोरन्यलक्षणं अयुक्पादयोरप्यन्यत्। अत्र द्वितीयचतुर्थौ युक्पादौ प्रथमतृतीयावयुगिति। युक् युग्मं समं चरममिति युजः पर्यायः। अयुगयुग्ममयुगं विषमं पूर्वं प्रथममिति विषमस्य पर्यायः।

उपचित्रमिति। यदि पूर्वपदं प्रथमतृतीयपादं ललितव्रता भवति, अन्यत् द्वितीयचतुर्थपादं दोधकम् इदमुपचित्रं वेदितव्यम्। ''सयुगात्सलगाः ललितव्रता'', ''दोधकमिच्छति भत्रितयाद्गौ''।

उदाहरणं तरला इति। तत्र सखीं प्रति दूतीवाक्यम्— हे वातपराहतामरसाक्षि! तरलाश्चञ्चलाः दृष्टयः कटाक्षाः, क्व नु न यान्ति न पतन्ति अपि तु सर्वत्र पतन्तीत्यर्थः। पक्षे रहं तामरसमित्यमरः, अतः अयं तव वल्लभः त्वदपाङ्गशतांशं तव अपाङ्गपातशतभागस्य अंशम् एकभागमपि प्राप्य कृतार्थः अस्तु साधितार्थो भवतु। कोपं त्यक्त्वा दृष्टिपातेन वल्लभं सुखिनं कुर्वित्यर्थः।

**Eng. Trans.**—If the first and the third quarters of a stanza are in the metre *Lalitavratā* and the second and the fourth are in *Dodhaka;* then the metre of the verse is called *Upacitra.* (63)

**प्रथमे चरणे ललितव्रता**
**द्रुतविलम्बितयुग् हरिणीप्लुता।। 64।।**
**न सखीवदनं तिलकोज्ज्वलं**
**न च वनं शिखिकोकिलनादितम्।**
**हरिणप्लुतसारसचित्रितं**
**रिपुगते न मनः सुखदं गुरौ।।**

अन्वयः— सखीवदनमित्यादि। सुखतया नान्वितोऽयं श्लोकः।

बालसुबोधिनी— प्रथम इति। यदि प्रथमे चरणे प्रथमद्वितीयपादे ललितव्रता भवति सा हरिणीप्लुता वेदितव्या। कीदृशी; युजि स्थितं द्रुतविलम्बितं यस्याः सा द्रुतविलम्बितयुक्, राजदन्तादित्वात् परनिपातः। द्वितीयचतुर्थपादयोः द्रुतविलम्बितमित्यर्थः। द्रुतविलम्बितमाह नभौ भरौ।

उदाहरणं न सखीति। तिलकोज्ज्वलं तिलकेन मृगमदादिकृतेन उज्ज्वलं सखीवदनं वल्लभामुखम्। तथा शिखिकोकिलनादितं शिखिभिः मयूरैः कोकिलैश्च नादितं शब्दितं वनञ्च। कीदृशं; हरिणप्लुतसारसचित्रितं हरिणानां प्लुतेन गमनेन आरसेन शब्देन सह वर्त्तन्त इति सारसाश्चातकादिपक्षिणः तैः चित्रितम्। हरिणानां पादन्यासकलादानादिदर्शनात् पक्षिणां शब्दश्रवणात् मनोहरमित्यर्थः। गुरौ रिपुगते वृहस्पतौ षष्ठराशिस्थिते सति मनः सुखदम् आनन्दकरं न भवति। स्वराशेः षष्ठो राशिः रिपुरुच्यते। तथा च मदीय एव यात्रामङ्गले— तनुर्धनं सहोदरो बन्धुः सुतो रिपुस्तथा। पत्नी हि धनधर्मश्च कर्म चायव्ययौ स्मृताविति।

**Eng. Trans.**—If the first and the third lines of a stanza are in the metre *Lalitavratā* and the second and the fourth are in *Drutavilambita*, then the resultant metre is styled *Hariṇīplutā*. (64)

**प्रथमकमथ नौ रयौ च युग्मं**
**नजजरगाः कथयन्ति पुष्पिताग्राम्।। 65।।**
**क्षणमपि विरहः पुरा न सेहे**
**नयननिमीलनखिन्नया यया ते।**

श्वसिति कथमसौ रसालशाखां
चिरविरहेण विलोक्य पुष्पिताग्राम्।

अन्वयः— नयननिमीलनखिन्नया यया पुरा क्षणमपि ते विरहः न सेहे असौ पुष्पिताग्रां रसालशाखां विलोक्य चिरविरहेण कथं श्वसिति।

बालसुबोधिनी— अथ यदि प्रथमकं प्रथमतृतीयचरणं नौ नगणद्वयं ततः रयौ रगणयगणौ च स्युः युग्मं द्वितीयचतुर्थं नजजरगाः नगणजगणद्वयरगणगुरुवर्णाः स्युः तां पुष्पिताग्रां कथयन्ति।

उदाहरणं क्षणमिति। तत्र दूती राधाकृष्णयोः पूर्वानुरागं वक्तुमाह— हे कृष्ण! यया राधया पुरा पूर्वस्मिन् समये ते तव विरहः वियोगः क्षणमपि न सेहे। असौ राधा चिरविरहेण बहुकालविरहेण पुष्पिताग्रां रसालशाखाम् आम्रशाखां विलोक्यं कथं श्वसिति जीवति। श्वस् प्राणधारणे धातुः। तया कीदृश्या नयननिमीलनखिन्नया निरीक्षणविघातात् चक्षुर्निमिषेऽपि दुःखितया।

**Eng. Trans.**—If the two odd quarters contains the *gaṇa*s namely *na, na, ra* and *ya;* and the even quarters have *na, ja, ja, ra* and *ga,* then the metre is called *Puṣpitāgrā*. (65)

इयमथ विरतौ गवर्जिता यदि
हि तदाऽपरवक्त्रमिष्यते।। 66।।
हरचरणरजोभरश्चिरान्न
शिरसि कौतुकमण्डलीकृतः।
हरिरपि न मनागपि स्तुतो
गलितमिदञ्च वपुः करोमि किम्।।

अन्वयः— चिरात् हरचरणरजोभरः शिरसि न कौतुकमण्डली कृतः मनागपि हरिरपि न स्तुतः इदं वपुः गलितं (अधुना) किं करोमि।

बालसुबोधिनी— इयमिति। हीति प्रसिद्धौ, इयं पुष्पिताग्रा अथ विरतौ कात्स्न्ये पादान्ते यदि गवर्जिता गुरुरहिता भवति, सा अपरवक्त्रमिष्यते।

उदाहरणं हरेति। तत्र कश्चिदात्मानं प्रति अविवेकितामाह— चिरात्



चिरकालात् हरचरणरजोभरः शिरसि न कौतुकमण्डलीकृतः हरचरणोऽपि चिरं

न सेवित इत्यर्थः। किञ्च हरिरपि श्रीवासुदेवोऽपि मनागपि ईषदपि च स्तुतः गुणकर्माणां कीर्तनेन न सन्तोषितः। किञ्चिदीषन्मनागल्प इत्यमरः। इदञ्च वपुः शरीरं वार्द्धक्यप्राप्तम्। एवं यौवनावस्थायां गतायाम् अधुना किं करोमि। न किञ्चित् कर्त्तुं समर्थोऽस्मीति।

**Eng. Trans.**—If there does not exist any *ga* i.e. a *guru* syllable at the end of the intermediate quarters of a stanza in the metre *Puṣpitāgrā*, then the metre is styled *Aparavaktra*. (66)

वंशस्थमाशंसति युग्मपादयो—
रयुग्मयोस्तद्गुरुपूर्वमायताम्।। 67।।
शैलाधिरोहाभ्यसनाधिकोद्धरैः
पयोधरैरामलकीवनाश्रिताः।
तं पार्वतीयाः प्रमदाश्चचायिरे
विहारविस्फारितविभ्रमेक्षणाः।।

अन्वयः— शैलाधिरोहाभ्यसनाधिकोद्धरैः पयोधरैः आमलकीवनाश्रिताः विहारविस्फारितविभ्रमेक्षणाः पार्वतीयाः प्रमदाः तं चचायिरे।

बालसुबोधिनी— वंशस्थमिति। यदि युग्मपादयोः द्वितीयचतुर्थयोः वंशस्थम्, अयुग्मं प्रथमतृतीययोस्तदेवं वंशस्थं गुरुपूर्वं भवति, ताम् आयताम् आशंसन्ति। वदन्ति वंशस्थमिदं जतौ जरौ।

उदाहरणं शैलेत्यादि। तम् अर्जुनं पार्वतीयाः प्रमदाः पर्वतवासिन्यः स्त्रियः चचायिरे पूजितवत्यः। कीदृश्यः, विहारविस्फारितविभ्रमेक्षणाः विहारेण लीलया विस्फारिताणि विभ्रमेण कामचेष्टया युक्तानि ईक्षणानि याभिस्ताः कामचेष्टया युक्तकटाक्षेणैव पूजितवत्य इत्यर्थः। कीदृश्यः, शैलाधिरोहस्य पर्वतारोहणस्य अभ्यसनेन पुनः पुनरारोहणेनाधिकोद्धरैः महत्वादधिकभारयुक्तैः पयोधरै स्तनैः विशिष्टाः अतएव विश्रामाय आमलकीवनं श्रयत इति तथा।

**Eng. Trans.**—If the first syllable of the odd quarters of a stanza in the metre *Vaṁśastha*, becomes *guru*, then the metre is said to be *Āyatā*. (67)

प्रथमे ससजा गयुग्मयुक्ता
शिशुलीला* चरमे सभौ रयौ चेत्।। 68।।
अयि काककिशोर पक्षलक्ष्म्या
न विदध्याः पिकशावकेन साम्यम्।
वचसि स्फुटतां गते तदानीं
युवयोः स्यादधरोत्तरावबोधः।।

अन्वयः— अयि काककिशोर; पक्षलक्ष्म्या पिकशावकेन साम्यं न विदध्याः; तदानीं वचसि स्फुटतां गते युवयोः अधरोत्तरावबोधः स्यात्।

बालसुबोधिनी— प्रथम इति। चेत् यदि प्रथमे प्रथमतृतीयपादे ससजाः गयुग्मयुक्ताः सद्वयजगणद्वययुक्ताः स्युः; चरमे द्वितीयचतुर्थपादे सभौ रयौ सा शिशुलीला वेदितव्या।

उदाहरणमयीति। अयि, हे काककिशोर! काकशिशो! पक्षलक्ष्म्या पक्षसा-दृश्येन पिकशावकेन कोकिलशावकेन साम्यं न विदध्याः न धेहि। यतस्तदानीं वसन्ते वचसि स्फुटतां गते युवयोः अधरोत्तरावबोधः हीनोत्तरज्ञानं स्यात्। अधरस्तु पुमानोष्ठे हीनेऽनूर्द्धे तु वाच्यवदिति मेदिनी।

**Eng. Trans.**—When there exist the *gaṇa*s namely *sa, sa, ja, ga* and *ga* in the two odd lines; and *sa, bha, ra* and *ya* in the even quarters, the metre is called *Śiśulīlā*. (68)

इयमेव भवेद्गवर्जिता
यदि शेषे खलु सा प्रियम्वदा।। 69।।
प्रतिवाचमदत्त केशवः
शपमानाय न चेदिभूभुजे।
अनुहुङ्कुरुते घनध्वनिं
न हि गोमायुरुतानि केशरी।।

अर्द्धसमवृत्तानि समाप्तानि।

अन्वयः— केशवः शपमानाय चेदिभूभुजे प्रतिवाचं न अदत्त; केशरी घनध्वनिम् अनुहुङ्कुरुते गोमायुरुतानि न हि।



* कालभारिणीति छन्दोमञ्जर्य्याम्।

बालसुबोधिनी— इयमिति। इयमेव शिशुलीला शेषे सर्वपादान्ते यदि गवर्जिता गुरुरहिता* भवेत् खलु सा प्रियम्वदा वेदितव्या।

उदाहरणं प्रतिवाचमिति। केशवः कृष्णः शपमानाय निन्दां कुर्वते चेदिभूभुजे शिशुपालाय प्रतिवाचं प्रतिवचनम् अदत्त न दत्तवान्। अर्थान्तरोपन्यासमाह— केशरी सिंहः घनध्वनिं मेघशब्दम् अनुहुङ्कुरुते अनुपश्चात् प्रतिसिंहशङ्कया हुङ्कारं करोति; न हि गोमायुरुतानि शृगालशब्दान् अनुहुङ्कुरुते।

इति श्रीकविपञ्चाननचक्रवर्तिनिर्मितायां वृत्तमालाटीकायां बालसुबोधिन्याम् अर्द्धसमवृत्तानि।

**Eng. Trans.**—If there exists no *guru* syllable at the end of every quarter of a stanza in the metre *Śiśulīlā*, then the metre is called *Priyamvadā*. (69)

## अथ विषमवृत्तम्

**अष्टाक्षरेषु पादेषु नाद्यात् स्नौ योऽम्बुधेः वक्त्रम्।। 70।।**

**भूपाल भवदीयस्य नौचित्यं तत्प्रतापस्य।**
**यदहारि परस्त्रीणां वक्षः काश्मीरलौहित्यम्।।**

अन्वयः— (हे) भूपाल; भवदीयस्य तत्प्रतापस्य न औचित्यं, यत् परस्त्रीणां वक्षः काश्मीरलौहित्यम् अहारि।

बाहुसुबोधिनी— सम्प्रति विषमवृत्तमाह अष्टाक्षरेष्विति। यत्र चतुर्णां पादानां गुरुलघुसाम्यमक्षरसाम्यञ्च नास्ति तदेव विषमवृत्तमुच्यते। उक्तञ्च— भिन्नचिह्नचतुष्पादं विषमं परिकीर्तितमिति। तच्च चतुर्विधम्— वक्त्रं चतुरुर्द्धम् उद्गता प्रचुपितञ्चेति। तत्र वक्त्रं दर्शयति अष्टाक्षरेष्विति। आद्यन्तौ वर्णौ पृथक्कृत्य मध्ये द्वौ गणाविति वक्त्रभेदानां प्रस्तावः। अष्टाक्षरेषु आद्यात् अक्षरात् परौ यदि स्नौ सगणनगणौ न भवतः अम्बुधेः चतुर्थाक्षरात् परः यः यगणः भवति तद्वक्त्रं वेदितव्यम्।

---

* गवर्जिता गुरुरहितेत्यनेन न हि ह्रस्ववर्णयुक्तत्वं कथितं किन्तु तद्वर्णाभाव इति। अर्थात् शिशुलीलायां समे पादे द्वादशाक्षराणि विषमे एकादशाक्षराणि, अत्र तु समे एकादशाक्षराणि विषमे दशाक्षराणीति।

उदाहरणं भूपालेति। तत्र कश्चित् राज्ञः पराक्रमं स्तौति— हे भूपाल! भवदीयस्य प्रतापस्य तद् औचित्यं युक्तं न भवति। किन्तदित्यत्राह— परस्त्रीणां शत्रुस्त्रीणां स्वामिवधात् वक्षसि स्थितस्य काश्मीरस्य कुङ्कुमस्य लौहित्यं रक्तत्वं अहारीति यावत्। देवराजमपि जेतुमुचितस्य तव विक्रमस्य मनुष्यशत्रुमारणं कियदित्याशयः।

**Eng. Trans.**—If in a stanza having eight-lettered quarters, there be no *sa* or *na* after the first syllable and there be the *gaṇa* namely *ya* after the fourth syllable, the metre is then called *Vaktra*. (70)

**युग्मयोस्तु जकारेण वक्त्रं पथ्येति कीर्त्यते।। 71।।**

**नाभाजि नैगमः पन्था नाभाजि* चरणं तव।**

**न जाने पार्वतीजाने किमिदानीं भविष्यति।।**

अन्वयः— नैगमः पन्थाः नाभाजि, तव चरणं नाभाजि, हे पार्वतीजाने! इदानीं किं भविष्यति (अहं) न जाने।

बालसुबोधिनी— युग्मयोरिति। तदेव वक्त्रं पथ्येति कीर्त्यते। केन विशेषेण— युग्मयोः द्वितीयचतुर्थपादयोरम्बुधेः (चतुर्थवर्णात्) परेण जकारेण। अत्र जकारः वर्गीयः।

उदाहरणं नाभाजीति। हे पार्वतीजाने शम्भो! नैगमः पन्थाः वेदोक्तस्वर्गादि-साधनयजनमार्गः नाभाजि नाश्रितः, किञ्च मोक्षमार्गः तव चरणञ्च नासेवि न सेवितम्। इदानीं आयुषः क्षये सति किं भविष्यतीति न जाने। उभयोरभावात् पापफलमेव भविष्यतीति भावः।

**Eng. Trans.**—If there exists the *gaṇa* namely *ja,* after the fourth syllable in the two even quarters of a stanza in the metre *Vaktra,* then the metre is styled *Pathyāvaktra*. (71)

**नाद्यात् स्नौ सर्वादेर्युजस्तुर्याद् युग्मपादयोः।**

**तदन्ययोर्यथाशोभमिति प्रायः प्रदृश्यते।। 72।।**

बालसुबोधिनी— वक्त्रभेदमुपसंहरति नाद्यादिति। यत्र सर्वपादेषु आद्यक्षरात् परौ स्नौ सगननगणौ न स्तः। युग्मयोः द्वितीयचतुर्थपादयोः तुर्यादक्षरात् परः जकारः। तदन्ययोः प्रथमतृतीयपादयोरम्बुधेः यथाशोभमीदृगलक्षणं यत्र प्रायो



* नासेवि इति पाठान्तरम।

दृश्यन्ते स वक्त्रभेदो वक्तव्यः। एवमेव छन्दोविचित्यामपि— पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। गुरुः षष्ठञ्च पादानां शेषेष्वनियमो मतः। प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम्। लोकेऽनुष्टुबिति ख्यातिः तस्याष्टाक्षरता कृतेति छन्दोमञ्जर्याम्।

**Eng. Trans.**—If in all the quarters of a stanza having eight syllables each, there do not exist *sa* and *na* after the first syllable; and there exists *ja* after the fourth syllable in the even quarters, there exists *ya* after the fourth syllable in the odd quarters and there be no fixed norm regarding other syllables, the metre is then called *Vaktrabheda* (more popularly *Anuṣṭhubh)*. (72)

प्रथमे पादे सजसलानि
तदनुचरणे नसौ जगौ।
यद्यथ भनजलगाः स्युरथो
सजसाज्जगौ च भवतीयमुद्गता।। 73।।

विनयं गुणा इव विवेक-
मपनयभिदं नया इव।
न्यायमवधय इवाशरणाः
शरणं ययुः शिवमथो महर्षयः।। (किरात, 12/17)

## विषमवृत्तानि समाप्तानि

अन्वयः— अथ अशरणा महर्षयः विनयं गुणा इव, अपनयभिदं विवेकं नया इव, न्यायम् अवधय इव शरणं ययुः।

बालसुबोधिनी— उद्गतामाह प्रथम इति। यदि प्रथमपादे सजसलानि सगण-जगण-सगण-लघुवर्णाः स्युः तदनुचरणे द्वितीयपादे नसौ जगौ, अथ तृतीयपादे यदि भनजलगाः स्युः, अथो चतुर्थपादे सजसात् परौ जगौ भवतः, इयमुद्गता भवति।

उदाहरणं विनयमिति। अशरणाः अनन्यशरणाः महर्षयः शिवं शरणं ययुः प्रापुः। अत्रोपमानत्रयमाह विनयमिति। विनयं नीतिशास्त्रानुसारिणं पुरुषं गुणाः शौर्यादय इव। यद्वा श्रुतिस्मृतिशास्त्रोक्तनीतिमार्गं शमदमादय इव। तथा अपनयभिदं

कुनीतिभेदकं विवेकं पूर्वापरावमर्षं नया नीतिमार्गा इव। तथा न्यायं नीतिमार्गम् अवधयः धर्ममर्यादा इव। इह पदचतुरुर्द्ध प्रचुपितयोः प्रकारः प्रायोऽप्रसिद्धतया नोक्तः।

इति श्रीकविपञ्चाननचक्रवर्तिनिर्मितायां वृत्तमालाटीकायां बालसुबोधिन्यां विषमवृत्तानि।

**Eng. Trans.**—If there be the *gaṇa*s namely *sa, ja, sa* and *la* in the first quarter; *na, sa, ja* and *ga* in the second; *bha, na, ja, la* and *ga* in the third; and *sa, ja, sa, ja* and *ga* in the fourth quarter; then the metre is styled *Udgatā*. (73)

## अथ जातिः

**उक्तञ्च त्रिविधं वृत्तं कथ्यन्ते जातयोऽधुना।**
**भजसा गुरुयुग्मञ्च तथा लघुचतुष्टयम्।। 74।।**
**चतुर्मात्रागणाः पञ्च ते चाः क एकमात्रकः।**
**द्विमात्रको हि दः प्रोक्तः खकारोऽपि चतुर्लघुः।। 75।।**

बालसुबोधिनी— यदधीना गिरां सर्वाः सम्पदः पद्मयोनयः।
तत् श्रीकृष्णपदाम्भोजं स्मरणं मनसोऽस्तु मे।।

सम्प्रति पूर्वानुवादं पुरःसरं जातीः कथयितुमाह उक्तमिति। तत्प्रसिद्धं त्रिविधं समार्द्धसमविषमं वृत्तम् उक्तं मया कथितम्। अधुना आर्यावैतालीयमात्रासमकञ्चेति त्रिविधाः जातयः कथ्यन्ते। तत्रादावार्यां वक्तुं कविसम्प्रदायानुसारेण गण-तत्संख्यादिनियममाह भजसा इति। आर्यायां सप्तगणाः बोद्धव्याः। अत्रादौ पञ्चविशेषे भजसाः त्रयः, गुरुद्वयं तथा तेन प्रकारेण लघुचतुष्टयञ्चेति एते पञ्च गणाः चतुर्मात्राः चत्वारः मात्राः येषां ते तथा। ते पञ्चापि गणाः चाः चसंज्ञकाः वेदितव्याः। तथा कः एकमात्रः कः वेदितव्यः। दः द्विमात्रकः दसंज्ञको वेदितव्यः। खकारोऽपीति, चतुर्लघुः उक्तलघुष्टयः खः खसंज्ञको वेदितव्य इत्यर्थः। एतेन नात्रन्यगणा वेदितव्या इति नियमः।

**Eng. Trans.**—Having stated the features of the three *Vṛttas* namely *Sama, Ardhasama* and *Viṣama*, the characteristics of the three *Jātis* namely *Āryā, Vaitālīya* and

*Mātrāsamaka* are now being stated. In *Āryā,* there are five *gaṇas* which are collectively called *'ca';* the five *gaṇas* being those three of *bha, ja, sa;* one of the *guru* syllables and one of the *laghu* syllables. A syllable having one *mātrā* (syllabic instant) is called *ka,* having two instants *da* and four *laghu* syllables taken collectively is called *kha.* The rules of determining the *gaṇas* (as in the case of *Vṛtta)* are not applicable here. (74-75)

विषमेषु यदि जहीनाः प्रतिदलमष्टौ गणाः भवन्त्यार्या।
पश्चार्द्धे कः षष्ठो दोऽष्टम उभयोश्च चाः शेषाः।। 76।।

विषधरतोऽप्यतिविषमः खल
इति न मृषा वदन्ति विद्वांसः।
यदयं नकुलद्वेषी
पुनः पिशुनः सकुलद्वेषी।।

अन्वय— खलः विषधरतः अपि अतिविषमः इति विद्वांसः मृषा न वदन्ति। यद् अयं (सर्पः) नकुलद्वेषी, पिशुनः पुनः सकुलद्वेषी।

बालसुबोधिनी— तत्रादावार्यामाह विषमेष्विति। यदि प्रतिदलं प्रतिपद्यार्द्धयोरित्यर्थः अष्टौ गणा भवन्ति सा आर्या वक्तव्या। गणाः कीदृशाः; विषमेषु प्रथम-तृतीय-पञ्चम-सप्तमेषु गणेषु जहीनाः जगणेन हीनाः रहिताः किञ्च यदि पश्चार्द्धे कः षष्ठो गणो भवति। उभयोः दलयोः दः अष्टमः गणः आभ्यां शेषाः षड्गणाः चाः चसंज्ञका भवन्तीत्यर्थः।

उदाहरणं विषधर इति। खलः दुर्जनः विषधरतः सर्पादपि अतिविषमः अतिशयक्रूरः इत्येतद्विद्वांसः मृषा न वदन्ति किन्तु सत्यमेवेत्यर्थः। हेतुमाह— यत् यस्मात् अयं विषधरः नकुलद्वेषी नकुलस्यैव द्वेषकः। पिशुनस्तु कुलेन सजातीयसमूहेन वर्त्तत इति सकुलं प्राणिमात्रमित्यर्थः, तस्य द्वेषी विद्वेषकः। सजातीयैः कुलं यूथमित्यमरः।

**Eng. Trans.**—In the metre *Āryā,* there exist eight *gaṇas* in each half of the stanza. The *gaṇa* called *ja* cannot exist in the first, the third, the fifth and in the seventh position. There exists *ka* i.e. one syllabic instant. The eighth *gaṇa* in both the

halves is *da* i.e. having two syllabic instants and other *gaṇa*s are *ca*. (76)

**यदि पुनरुभयोर्दलयोः षष्ठोऽथगणे भवति हि जः खो वा।**
**पूर्वार्द्धवदपरार्द्धं स्यादिह गीतिं वदन्ति विद्वांसः।। 77।।**
**दुर्गतगृहिणि किमेतैः कुसुमसमेतैः कचान्तविन्यासैः।**
**मुखरजनारवपङ्के कलय कलङ्के परं निमग्नासि।।**

अन्वयः— हे दुर्गतगृहिणि! कुसुमसमेतैः एतैः कचान्तविन्यासैः किम्? मुखरजनारवपङ्के कलङ्के परं निमग्नासि (इति) कलय।

बालसुबोधिनी— यदीति। इहेत्यार्याविषये यदि तु उभयोः दलयोः षष्ठो गणः जो गणः खो खगणो वा भवति। पूर्वार्द्धवदपरार्द्धं स्यात् विद्वांसः तां गीतिं वदन्ति।

उदाहरणं दुर्गतगृहिणीति। हे दुर्गतगृहिणि! दरिद्रभार्ये! कुसुमसमेतैः पुष्पयुक्तैः तव कचान्तविन्यासैः केशान्तप्रसाधनैः किम्? क उपयोगः? निःस्वस्तु दुर्विधो दीन इत्यमरः। कथमिति चेत्तत्राह, इयं दरिद्रा परपुरुषाभिलासाय वेशं करोतीति मुखरजनानामारवोऽप्रियभाषणमेव पङ्को यस्मिन् तादृशे कलङ्के अपवादे परं केवलं निमग्नासि इति कलय पश्येति वाक्यार्थं कर्म। अत्र ''पद्यार्द्धे सर्वेषा''मित्युक्तयुक्तेः चतुर्थपादान्तवर्णस्य गुरुत्वम्।

**Eng. Trans.**—If in a stanza in the metre *Āryā*, both the halves are similar, and the sixth syllable is either *ja* or *kʰa*, then the metre is styled *Gīti*. (77)

**मधुरप्रबन्ध एकः क एव षष्ठो गणो यत्र।**
**परार्द्धमिव पूर्वार्द्धं स्यादुपगीतिर्भवत्येषा।। 78।।**
**कमले वा कुटजे वा यदपि भ्रमरी नरीनर्त्ति।**
**कमलं तथापि कमलं कुटजं कुटजं वयं ब्रूमः।।**

**अन्वयः— सुस्पष्टः।**

बालसुबोधिनी— मधुरेति। यत्र एकः केवलः मधुरप्रबन्धः मधुरैः प्रबन्धः रचनाविशेषः भवति, षष्ठो गणश्च कः कगण एव परार्द्धमिव आर्यायाः परार्द्धमिव पूर्वार्द्धम् एषा उपगीतिः भवति।



उदाहरणं कमले इति। तत्र कश्चित् सिध्र आत्मश्लाघाभिप्रायेनान्यासक्तां

कामिनीमन्योपदेशेन निन्दन्नाह— भ्रमरी भ्रमरस्त्री कमले पद्मे कुटजे गिरिमल्लिकायाम्वा यद्यपि नरीनर्त्ति मधुविशेषपानार्थं भ्रमति तथापि कमलं कमलमेव कुटजमपि तथैव। नैव किं तुच्चमुत्तमम्वा कर्त्तुं शक्नोतीत्यर्थः, इत्येवं वयं ब्रूमः। कुटजो गिरिमल्लिकेत्यमरः। वाग्भङ्ग्या तु 'भ्रमरः कामुके भृङ्गे' इत्यमरदर्शनात् भ्रमरीशब्देन कामुकी कमलकुटजशब्दाभ्यामुत्तमाधमपुरुषाव-भिधीयते।

**Eng. Trans.**—If in a stanza in the metre *Āryā,* both the halves are similar, the sixth *gaṇa* becomes *ka* and the composition is also graceful, then the metre is called *Upagīti.* (79)

**आर्यापरार्द्धघटितं प्रथमार्द्धं दृश्यते यत्र।**
**पूर्वार्द्धमिव परार्द्धं यस्याः सा स्यादियं तु चोद्गीतिः।। 79।।**
**कति कति न योषाः यासु सतोषा गुणैः पुरुषाः।**
**दोषाः किमपि यवीयाश्चिरसहनीया भवन्ति सा कापि।।**

अन्वयः— यासु गुणैः पुरुषाः सतोषाः (ताः) योषाः कति कति न सन्ति किमपि। (किन्तु) यदीयाः दोषाः चिरसहनीया भवन्ति सा कापि।

बालसुबोधिनी— आर्येति। यत्र वृत्तौ आर्यायाः परार्द्धेण घटितं निर्मितं प्रथमार्द्धमपि दृश्यते; किञ्च यस्याः पूर्वार्द्धञ्च परार्द्धमपि स्यात्, इत्येतल्लक्षणा या सा उद्गीतिः वेदितव्या।

उदाहरणं कति कतीति। यासु पुरुषाः स्वामिनः गुणैः पातिव्रत्यादिभिः धर्मैः सतोषाः ताः योषाः स्त्रियः कति कति न सन्ति। किमपीति सम्भावनायां, बह्व्यः सन्तीत्यर्थः। अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये। अयुक्ते च पदार्थे च कामाचारक्रियासु चेति धरणिः। किन्तु यदीयाः दोषाश्चिरसहनीया भवन्ति सा कापि तनुतरेत्यर्थः।

**Eng. Trans.**—Whenever the two halves of the metre *Āryā* become reverse, the new metre is then called *Udgīti.* (79)

**षष्ठो जो वा खो वा यस्यामष्टौ गणाश्चतुर्मात्राः स्युः।**
**प्रथमार्द्धमिव परार्द्धं कविभिः कथिता तथेयमार्यागीतिः।। 80।।**

वरदाय नमोहरये पतति जनोऽयं स्मरन्नपि न मोहरये।
बहुशश्चक्रन्द हता मनसि दितिर्येन दैत्यचक्रन्दहता।।

अन्वयः— अयं जनः (यं) स्मरन्नपि मोहरये न पतति (तस्मै) वरदाय हरये नमः। दैत्यचक्रं दहता येन मनसि हता दितिः बहुशः चक्रन्द।

बालसुबोधिनी— षष्ठ इति। यस्यां वृत्तौ प्रत्येकं चतुर्मात्राः चतस्रो मात्राः येषां तादृशा अष्टौ गणाः स्युः, तत्र च षष्ठो गणः जो वा खो वा यदि स्यात्। किञ्च तथा तेन प्रकारेण प्रथमार्द्धमिव परार्द्धं कविभिरियम् आर्यागीतिः कथिता। अतः परमार्योक्तगणादिनियमाभावः।

उदाहरणं वरदायेति। अयं जनः त्रिभुवनः यं स्मरन्नपि चिन्तयन्नपि मोहरये मोहवेगे न पतति निमज्जति। जनो लोके महर्ल्लोकान् परलोके च पामर इति मेदिनी। तस्मै वरदाय वरदानकर्त्रे हरये भवदुःखनाशकाय नमः। दैत्यचक्रं दैत्यसमूहं दहता विनश्यता येन कर्त्रा मनसि हता मर्मपीडिता दितिः दैत्यजननी बहुशः चक्रन्द रुरोद पुत्रशोकेनेत्यर्थः। दितिदैत्यजनन्याञ्च खण्डनेऽपि च योषितीति मेदिनी।

**Eng. Trans.**—If in the metre of a stanza, both the halves correspond to those of the metre *Āryā,* there exist eight *gaṇa*s having four syllabic instants in each half; but the sixth *gaṇa* is either *ja* or *kha,* then the metre is called *Āryāgīti*. (80)

दत्रयमयुजोर्मुखे युजोर्दचतुष्कं रलगाश्च पृष्ठतः।
वैतालीयं तदुच्यते लघुषट्कं यदि नैकतः पुनः।। 81।।
रतिबान्धवमेव मन्यते त्वामेकं बहुविभ्रमा सखी।
कोपात्कन्दर्पमार्गणैरतिबिद्धा क्व नु सा भविष्यति।।

अन्वयः— बहुविभ्रमा सखी एकं त्वामेव रतिबान्धवं मन्यते, कोपात् कन्दर्पमार्गणैः अतिबिद्धा सा क्व नु भविष्यति।

बालसुबोधिनी— वैतालीयमाह दत्रयमिति। अयुजोः प्रथमतृतीयपादयोः मुखे आदौ यदि दत्रयं स्यात्, युजोः द्वितीयचतुर्थपादयोः मुखे दचतुष्कं पृष्ठतः तेषां पश्चाद् यदि रलगाः स्युः। तुशब्दोऽत्र प्रतिपादसंग्रहार्थः, यदि पुनरेकत्रस्थाने लघुषट्कं न स्यात् तद् वैतालीयं नाम वृत्तमुच्यते।

उदाहरणं रतिबान्धवमिति। तत्र राजाग्रतो दूतीवाक्यम्— सखी तव प्रिया एकं केवलं त्वामेव रतिबान्धवं कामदेवं मन्यते जानाति। कीदृशी— बहुविभ्रमा बहवो विभ्रमा कामचेष्टा यस्याः तादृशीः। स्त्रीणां विलासविव्वोकविभ्रमा-ललितस्तथेत्यमरः। कुतस्तत्राह— यस्मात् स्वामिनमपविहाय इयमन्यं कामदेवं मन्यते इति। कोपादिव हेतोः कन्दर्पमार्गणैः कामशरैः अतिशयेन पुंखपर्यन्तमित्यर्थः। बिद्धा वक्षसि ताडिता इत्युत्प्रेक्षते। कालविलम्बमसहमानां प्रत्याह— नु वितर्के सा सखी क्व नु भविष्यति जीविष्यति नैवेत्यर्थः। अन्योऽपि तीक्ष्णशरैरतिशयेन बिद्धः वक्षसि न जीवतीति ध्वनितम्।

**Eng. Trans.**—If there exist three *da*s at the beginning of the two odd quarters, and four in the even ones; and after that there are *ra, la,* and *ga* in each quarter; and if there do not exist six *laghu* syllables in one place; then the metre is denominated as *Vaitālīya*. (81)

**वैतालीयोपसम्मुखे चादौपच्छन्दसकं रयौ च पश्चात्।। 82।।**
**मधुराधरपल्लवे गिराः पीयूषादपि माधुरीधुरीणाः।**
**पीनस्तनि कीदृशं तवेदं हृदयं के परिच्छेत्तुमीशते स्म।।**

अन्वयः— (हे) मधुराधरपल्लवे! पीनस्तनि! ते गिरः पीयूषात् अपि माधुरी धुरीणाः; अत के तव हृदयं परिच्छेत्तुम् ईशते स्म तव इदं कीदृशम्।

बालसुबोधिनी— अस्य भेदान्तरमाह वैतालीयेति। वैतालीयस्य उपसम्मुखे आदौ अयुक्पादयोर्मुखे दचतुष्कं तेषां पश्चात् रयौ च चेद् भवेयुः, यत्र लघुषट्कञ्च न स्यादिति च शब्दार्थः, तदौपच्छन्दसकं नाम वैतालीयं वेदितव्यम्।

उदाहरणं मधुराधरेति। तत्र युवत्यानाधरयोः पुरुषस्य प्रेमातिशयत्वात्तद्वाच-कशब्दोपन्यासात् कश्चित्कामुकः कामुकीं सम्बोधयति— हे मधुराधरपल्लवे मधुरः माधुर्ययुक्तः अधरः अधस्तादोष्ठः पल्लवः नवपत्रमिव यस्याः। अनेनाधरस्य सौकुमार्यं वर्त्तुलत्वञ्च सूचितम्। पीनस्तनि! पुष्टपयोधरे! पीनपदोपन्यासाद-भिनवयौवनावस्थोक्ता। ओष्ठाधरौ तु रदनाच्छदाधित्यमरः। पल्लवोऽस्त्री किशलयमिति च। ते तव गिरः वाचः पीयूषादपि माधुरी धुरीणाः अमृतादप्यतिशय-माधुर्यभारवाहिन्यः। हृदयं मनः पुनः के पुरुषाः परिच्छेत्तुं ज्ञातुम् ईशते समर्था

भवन्ति। तवाभिप्रायन्तु न केऽपि जानन्तीत्यर्थः। स्मेति न्युनं अनेन तस्या अन्यपुरुषासक्ततोक्ता तवेदं कीदृशं, न तवैवम्विधत्वं योग्यमित्यर्थः।

**Eng. Trans.**—If in the metre *Vaitālīya,* there exist *ra* and *ya* after the first *da;* then the metre is styled *Aupacchandasaka.* (82)

षोडशमात्रा चरणे चरणे यथातथं गतिलीलाशरणे।
सगणैर्विगणैर्लघुभिर्गुरुभिर्मात्रासमकं गदितं कविभिः।। 83।।

जगदुपकर्त्ता सुकृती सरलः
कोटिषु कोटिषु मध्ये विरलः।
असुभिर्वसुभिः समुचितवाग्भिः
परोपकारः क्रियते सद्भिः।।

अन्वयः— जगदुपकर्त्ता सुकृती सरलः कोटिषु कोटिषु मध्ये विरलः सद्भिः असुभिः वसुभिः समुचितवाग्भिः परोपकारः क्रियते।

बालसुबोधिनी— मात्रासमकमाह षोडशेति। हे गतिलीलाशरणे। यथातथं येन तेन प्रकारेण चरणे चरणे प्रतिपादं यदि षोडशमात्राः स्युः। यथातथत्वमेवाह— लघुभिः गुरुभिः वर्णैरित्यर्थः। कीदृशैः सगणैः गणनियमसहितैः विगणैः तन्नियमरहितैः कविभिः छन्दःशास्त्रविद्भिः तन्मात्रासमकं नाम वृत्तं कथितम्। चरणे चरणे इति वीप्सायां द्विर्भावः।

उदाहरणं जगदिति। जगदुपकर्ता सर्वभूतोपकारी सरलः अकपटः सुकृती साधुजनः कोटिषु कोटिषु मध्ये विरलः बहुतरजनेष्वपि दुर्लभः। यत्र प्राणादिभिरपि परोपकारः क्रियते। येन इत्यर्थे स इत्यर्थः। सद्भिरभ्यर्हितैः सकलैरिति यावत्। क्लीवलिङ्गमक्लीवेनैकवच्चेवेत्येकशेषः। यद्वा— वसुभिः धनैः समुचितवाग्भिः न्यायवचनैः सद्भिः धर्मज्ञैः साधुभिः परस्य श्रुतशीलादिगुणैः श्रेष्ठस्य उपकारः क्रियते, ते पुनः सुलभा एव। असुभिः प्राणदानैः जगदुपकर्त्ता प्राणिमात्रोपकारकः सुकृती तु विरल इत्यन्वयः। दूरानात्मोत्तमाः परा इत्यमरः।

**Eng. Trans.**—If there be no regulation of the *gaṇas*, but only sixteen syllabic instants in each quarter, then the metre is called *Mātrāsamaka.* (83)

षोडशमात्रा पादे पादे यमकाक्षरमधुमधुरस्वादे।
नवमाक्षरगुरु अकृतजकारा पज्झटिकेयं ललिताकारा।। 84।।
अर्थमनर्थं भावय नित्यं
नास्स्ति ततः सुखलेशः सत्यम्।
पुत्रादपि धनभाजां भीतिः
सर्वत्रैषा कथिता नीतिः।।

इति मात्रासमकम्

अन्वयः— नित्यम् अर्थम् अनर्थं भावय। ततः सुखलेशः नास्ति इति सत्यं, धनभाजां पुत्रादपि भीतिः, एषा नीतिः सर्वत्र कथिता।

बालसुबोधिनी— अस्य प्रभेदान्तरमाह षोडशमात्रा इति। यदि पादे पादे प्रतिपादं षोडशमात्राः स्युः। कीदृशे यमकाक्षरेण सजातीयवर्णोपादानेन मधुनोऽपि मधुरः श्रुतिसौख्यजनकः आस्वादः रसविशेषो यस्मिन्। किञ्च नवमाक्षरं गुरुः दीर्घो यस्याम्। अकृतजकारा न कृतो जकारो मध्यगुरुर्जगणोः यस्यां, तथा ललितैः कोमलाक्षरैः उपलक्षितः आकारो यस्याः। विशेष्यद्वारा सर्वत्र पादे, इयं पज्झटिका वक्तव्या।

उदाहरणमर्थमनर्थमिति।

**Eng. Trans.**—If there be sixteen syllabic instants in each quarter, and there be *yamaka*, if the ninth syllable is *guru* and there be no *ja,* then the metre is styled *Pajjhaṭikā*. (84)

इति गुरुमतमादरेण बालाः कविकृतिर्निर्मलदर्पणेषु दृष्ट्वा।
प्रतिकृतिरिव निर्मिता ममेयं रमयतु काव्यरसेषु मानसं वः।।

**Eng. Trans.**—Having received the words of the preceptor with honour, and having gone through the works of the poets, as children looks at the images in mirrors, this treatise is composed; may your heart relish in poetic taste.

अधोज्येष्ठगुरो लः स्यात्पूर्वे गाः सदृशाः परे।
प्रस्तारोऽयं सर्वदीर्घाद् यावल् लघुः स्मृतः।। 85।।

प्रश्नस्यार्द्धं समालिख्य दवयेद्यावदेककम्।
विषमं दलयेत्सैकं गुरुस्तत्मिन् समे लघुः।।86।। इति नष्टोन्नयनम्।
क्रमेण त्रिगुणां संख्यां विलिखेद्वृत्तमूर्द्धणि।
पिण्डितं लघुमुर्द्धाङ्कं प्रमाणं सैकमादिशेत्।। 87।। इत्युद्दिष्टम्।
विलिख्य पार्श्वयोरेकं मध्ये स्वस्वधराङ्कजम्।
मिलितं विलिखेद्वृत्तं मलघ्वेकलघुक्रमात्।।88।। इति वर्णात्मकः।
संख्या प्रश्ने तु वृत्तानां द्विगुणं वृत्तसंख्यया।
एकाङ्कमादिशेत् संख्यां पिण्डं स्वाङ्केन कर्मणा।।89।। इति वृत्तसंख्या।
वर्णैर्गुणितां संख्यां तस्यामूर्द्धं तथोभयम्।
वर्णा गुरुलघुमात्रा ज्ञेयाः पूर्वान्तरं ततः।।90।। इति गुरुलघुमात्रासंख्यः।
मूर्ध्ना तिर्यगधश्चापि द्विगुणावर्णमात्रतः।
लघुगुरुरन्तरस्य तुल्याभूर्मिरिहोच्यते।। 91।।
कविना कर्णपूरेण गुरुसम्मतकर्मणा।
मल्लदेवे महीपाले वृत्तमालेयमारचि।। 92।।
पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठन्तु पादानां शेषेष्वनियमो मतः।। 93।।

इति श्रीमल्लदेवीयश्रीकविकर्णपूररचिता वृत्तमाला समाप्ता।

# *KĀRIKĀ* INDEX

# *ŚLOKA* INDEX

***

## ABOUT THE AUTHOR

Dipak Kumar Sharma, *M.A., Ph.D.*, is a Reader in the Department of Sanskrit, Gauhati University. Dr. Sharma stood fourth in order of merit in P.U. Examination, secured highest aggregate of marks in B.A. Examination amongst the Honours students of all subjects and stood first in first class in M.A. (Sanskrit) Examination of Gauhati University. A brillient student and a recipient of three gold medals, Dr. Sharma has to his credit a good number of research papers published in various Journals as well as many articles in Assamese and Sanskrit in various newspapers and periodicals. Besides the *Vṛttamālā of Kavikarṇapūra*, Dr. Sharma is the author of :

1. *Śeṣakṛṣṇa's Pārijātaharaṇacampū : A Study*
2. *Durgāsaptaśatī* (ed.) (In Press)